॥ श्रीः ॥

श्रीमन्नीलकण्ठदीक्षितप्रणीतः

# ॥ नीलकण्ठविजयः ॥

## प्रथमाश्वासः ।

वन्दे वाञ्छितलाभाय कर्म किं तन्न कथ्यते ।
किं दंपतिमिति ब्रूयामुताहो दंपती इति ॥ १ ॥

दृष्ट्वा कौस्तुभमप्सरोगणमपि प्रक्रान्तवादा मिथो
गीर्वाणाः कति वा न सन्ति भुवने भारा दिवः केवलम् ।
निष्क्रान्ते गरळे द्रुते सुरगणे निश्चेष्टिते विष्टपे
मा भैष्टेति गिराविरास धुरि यो देवस्तमेव स्तुमः ॥ २ ॥

---

१. अस्मिन् श्लोके कविर्नीलकण्ठः स्वेष्टदेवतामर्धनारीश्वरं स्तौति । वन्द इत्युक्ते कर्माकाङ्क्षापूरकं पदं किम्? तद्वक्तु न शक्यते । दपतिमित्युक्ते अपशब्द । दंपती इत्युक्ते व्यक्त्यैक्यव्याघातः ॥

२. एतत्सच्छायं विष्णुपरं पद्यमिदम्—

नक्राक्रान्ते करीन्द्रे मुकुलितनयने मूलमूलेऽतिखिन्ने
नाहं नाहं न चाहं न च भवति पुनस्तादृशो मादृशेषु ।
इत्येवं त्यक्तहस्ते सपदि सुरगणे भावशून्ये समस्ते
मूलं यः प्रादुरासीत्स दिशतु भगवान्मङ्गलं संततं नः ॥

अपि [illegible]

लीढालीढपुराणसूक्तिशकलावष्टम्भसंभावना-
पर्यस्तश्रुतिसेतुभिः कतिपयैर्नीते कलौ सान्द्रताम् ।
श्रीकण्ठोऽवततार यस्य वपुषा कल्कयात्मनेवाच्युतः
श्रीमानप्पयदीक्षितः स जयति श्रीकण्ठविद्यागुरुः ॥ ३ ॥

यः संरम्भः कृतिविरचने दुष्कवीनामभेद्यो
यच्चैकाग्र्यं तदुचितपदान्वेषणे चित्तवृत्तेः ।
लभ्यं तच्चेदपि कवयतामन्ततस्त्रीण्यहानि
स्यादेवं किं सरसकविताराज्यदुर्भिक्षयोगः ॥ ४ ॥

अथवा किमिति स्मरामि दुष्कवीनधुना ।

सकलभुवनैकमङ्गळशङ्करगुणवर्णनप्रवृत्तेन ।
न स्मरणीयाः कुधियो लोकायतिका इव व्रतस्थेन ॥ ५ ॥

---

३. श्रुतेरुपबृंहणतयैव पुराणाना प्रामाण्यम् । सत्येवं पुराणानुरोधेन श्रुतीरन्यथा नयन्ति केचित् । तादृशो विमतस्थान्खण्डयितुमप्पय्यदीक्षितरूपेण धूर्जटिरवनाववततार । श्रीकण्ठाचार्यप्रणीतस्य ब्रह्मसूत्रभाष्यस्य शिवार्कमणिदीपिकाख्या अभ्यर्हिता व्याख्या श्रीमदप्पय्यदीक्षितेन अकारि । तस्य भ्रातृपौत्र एवास्य ग्रन्थस्य कर्ता नीलकण्ठ. ॥

४. ग्रन्थकृदयं मधुरानगरीं शासितवतस्तिरुमलनायकाख्यस्य भूपतेरमात्य आसीत् । तेन च तस्य बहुकार्यव्यासङ्ग. सुगम एव । तथा च ग्रन्थनिर्माणे तस्यावकाशो मृग्य आसीन्महाकवित्वसंपन्नस्यापि । तथैव सत्कवीनामन्येषामपि । बह्ववकाशवता तु कवित्वं नास्ति । कवयितुं परं ते प्रयस्यन्ति । कुकाव्यानि च कर्णारुंतुदानि निर्मिमते । अत एव सत्कविकृतयो विरला जाताः ॥

कति कवयः कति कृतयः
कति लुप्ताः कति चरन्ति कति शिथिलाः ।
तदपि प्रवर्तयति मां
शंकरपारम्यसंकथालोभः ॥ ६ ॥

वानामपि दैवतं गुरुमपि प्राचां गुरूणामिह
श्रीमन्तं मदनान्तकं कथमपि स्तोतुं कृतो निश्चयः ।
न त्वां त्वरयामि भारति बलात्कृष्टापि दुष्टे पथि
प्रासेनोपहतापि जातु कुपिता मा स्म प्रसादं त्यजः ॥ ७ ॥

नन्तव्याः कवयः कतीह बहुमन्तव्या रसज्ञाः कती-
त्येतावत्त्वलसः करोमि कवयो हृष्यन्तु रुष्यन्तु वा ।
आवात्स्यायनतन्त्रमाश्रुतिशिरःसिद्धान्तमुच्चावचा
विद्या यत्प्रभवा जयन्ति भुवि तां वन्दे गिरां देवताम् ॥ ८ ॥

चौर्येण प्रणयेन चापहरतः पल्लीषु गव्यान्यपि
स्त्यायन्ते चरितानि चेत्कविकुलोद्गीतानि गाथाशतैः ।
त्रैलोक्योद्भटकालकूटकबलीकारप्रकारं पुनः
स्तोतुं के प्रथमेऽपि नाम कवयो दूरेऽधिकारस्तु नः ॥ ९ ॥

---

७. हे भारतीति संबोधनम् । प्रासः शब्दालंकारः कुन्तश्च । प्रसादः काव्यगुणविशेषः अकोपनत्वं च ॥

८. ग्रन्थारम्भे स्मरणीया यद्यपि बहवः कवयः सहृदयाश्च, तथापि सर्वेषां मूलभूताया वाग्देव्या ध्यानेन तद्गतार्थं स्यादिति मत्वा तामेवास्मिन् पद्ये नमस्यति । वात्स्यायनतन्त्रं कामशास्त्रम् । श्रुतिशिरांसि उपनिषदः तेषां सिद्धान्तः वेदान्तशास्त्रम् ॥

**अष्टत्रिंशदुपस्कृतसप्तशताधिकचतुःसहस्रेषु ।**
**कलिवर्षेषु गतेषु ग्रथितः किल नीलकण्ठविजयोऽयम् ॥ १० ॥**

अस्ति किल समस्तसुरासुरस्तोमवन्दितचरणारविन्दस्य भगवतो महेन्द्रस्य स्थानं, आस्थानममृतान्धसां, आयतनमाश्चर्याणां, आकरो रत्नानां, अवधिर्वैषयिकानन्दस्य, किमपरमगोचरं गिराममरावती नाम नगरी । तत्र च निरालम्बे नभसि वर्तमानतया सर्वपथीनद्वारतया च पुनरनपेक्षितमूलशिलानिवेशनायासं, अनाकाङ्क्षितप्रतीहाररचनाप्रयासं, असंपादितशृङ्गसंबाधं, असंभावितपरिखामण्डलं, आचार इति केवलमभिनिर्वर्तितो नवः प्राकारः । प्रासादः पुनरस्ति वैजयन्त इत्यभूमिरारोहणोपयोगविधुरश्च । सर्वतोऽप्रतिहतचाराणां पौराणाममृतास्वादसुहितानामभ्यवहार्येण किं प्रयोजनम् । अपि च पुनरभिलषितमणिकनकभूषणाम्बरसंदायिषु मन्दारादिशाखिषु न किंचिदस्ति क्रेतव्यं विक्रेतव्यं चेति संज्ञामात्रशरण्याः पण्यवीथिकाः । किंच निरन्तरशिवध्याननिर्धूतकल्मषाः, निरतिशयतपोविशेषशोषिताः, वीतरागभयक्रोधमत्सराः, विषयपराङ्मुखाः, भुवि परमर्षय इति प्रथामागताः पण्डिता एव प्रणयिनो वारमृगीदृशाम् । अश्वमेधयाजिन इति, अग्निचित इति, मासोपवासिन इति, मांसवर्जिन इति, राजसूययाजिन इति, रणदुर्मदा इति, अन्नदा वयमभयदा इति शंसद्भिरपदानानि, संपतद्भिरितस्ततोऽप्यज्ञातमुखै-

---

१०. अस्य ग्रन्थस्य निर्माणकाल. कल्यब्दः ४७३८ = क्रिस्त्वब्द १६३६.

कौतुचिदवनिवासिभिर्जनैर्बलादपह्रियमाणेषु विमानेषु, आक्रम्यमाणेषु मन्दिरेषु, आकृष्यमाणे च बलादप्सरोगणे, न कश्चिदभिमन्यते ममेदमिति मन्दिराणि विमानानि मणिभूषणानि कळत्राणि वा नगरवासी जनः । किंचेदमपरमदेवतया न सुधाशनाः, अलाभादेव न तृणाशनाः, पवनाशना एव परिशेषात्कामदुघा गावः, पराक्रमिणो मतङ्गजाः, वातरंहसश्च वाजिन इति सकलपुरविलक्षणं लक्षणम् । अपि च --

**मूल्यं तत्किल वेश्मनां द्विजमुखे भक्त्यात्र यद्दीयते**
**वेश्यानां च पणः स एव सवने या दक्षिणा ऋत्विजाम् ।**
**पद्या सैव विशङ्कटा भवति या पद्यात्र तीर्थाम्भसां**
**द्वारं तत्र च तद्यदत्र करणद्वारं पिधेयं नृणाम् ॥ ११ ॥**

**अस्ति स्वादयितुं सुधास्ति वसितुं वासो नभश्चारिणां**
**धर्तुं सन्ति च भूषणानि शतशो न त्वास्ति धीर्जीवितुम् ।**
**येनान्यानुपजीव्यसर्वविभवे कर्मैकलभ्ये पदेऽ-**
**प्यायस्यन्ति वृथैव सेवक इति स्वामीति दुर्मेधसः ॥ १२ ॥**

इदं च परमाद्भुतमुत्प्रेक्षितं तस्यां, यत्किल विविधतपःप्रबन्धनिस्तन्द्रतया विस्मृतलोकतन्त्रेषु, चिरविधृतब्रह्मचर्यजीर्णतया कालमृत्युषु कन्दर्पस्य ब्रह्मर्षिहतकेषु भूतलादागत्य प्रसक्तेषु क्रीडितुमप्सरोभिः, पर्णशालां प्रविशाम इति प्रविशत्सु केळीगृहं, विस्रंसय जटामिति वेणीमालम्बमानेषु, अपनय वल्कलमित्यपनेतुकामेषु कुचदुकूलानि, न लोहितं कुर्यादिति निषेधत्सु

नखक्षतानि, आः कष्टमसंमतोऽयं पन्थाः शिष्टानामिति पिहितकर्णेषु चुम्बनभेदप्रस्तावनायां, निवीतधारणव्यग्रेषु नीवीमोचनावसरे, मन्त्रजपमुखरेषु मणितावसरे, आः स्मृतमद्य व्यतीपात इत्यन्तरा गन्तुकामेषु, अनुयुञ्जानेषु पुनः पुनरार्तवदिनानि शपथपूर्वकं, अतिक्रामति निषेकलग्नमित्यसहमानेषु बाह्यसुरतव्यापारविलम्बं, अवधीरयत्सु पुरुषायितं, असंमन्यमानेषु बन्धभेदान्, विगायत्सु वीटिकोपसेवनमप्यनुचितोऽयं काल इति, आनन्दमूर्च्छावसर एव निभृतमनुसंदधानेषु मन्त्रलिङ्गानि, परवश रतान्तनिद्रावसर एव यावत्संनिपातं च सहशय्येति परिहरत्सु पर्यङ्कशायिकां, द्वितीयसुरतारम्भ एव देहि मे कमण्डलुमिति त्वरमाणेषु मन्दाकिनीगमनाय, विहसन्ति विषीदन्ति विलज्जन्ते विस्मयन्ते च रम्भादिमेनकान्ता देववारकान्ताः ॥

प्रसजति महोत्सवे वा प्रचलति रथ्यासु तत्र शक्रे वा ।
निम्नानि पूरयन्ते पवनमये ताळवृन्तपवनेन ॥ १३ ॥

किं बहुना—

दुःखानां क्षतिरित्यबोधहतिरित्यानन्दविष्फूर्तिरि-
त्यन्तर्वाणिविकल्पजालजटिलान्मोक्षादपि ज्यायसी ।
यैषाऽविप्रतिपन्नसौख्यलहरीसंपातसंपादिनी
तत्सौन्दर्यविवेचने कवयतां मौनं क्षमं ह्रीमताम् ॥ १४ ॥

---

१४. मोक्षविषये बहुधा विप्रतिपत्तिः शास्त्रेषु प्रथिता । स्वर्गं तु 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् ॥' इति सर्वेऽपि तन्त्रकारा एककण्ठ्येन प्रब्रुवन्ति । अन्तर्वाणिः शास्त्रवित् ॥

आनीता वसुधातलात्सुकृतिनस्तस्यां हरेः शासना-
दुन्मीलन्मणिकिङ्किणीकलकलस्वाने विमाने स्थिताः ।
दृष्ट्वा व्योम निरास्पदं सचकितव्याघूर्णमानेक्षणा
न स्थातुं नच वा ततोऽवतरितुं प्रागल्भ्यमाबिभ्रते ॥ १५ ॥

मन्दानिलव्यतिकरच्युतपल्लवेषु
मन्दारमूललवलीगृहमण्डपेषु ।
पुष्पाणि वेणिवलयेषु गलन्ति तस्यां
सार्धं वहन्ति सुखासकसज्जिकानाम् ॥ १६ ॥

गायन्ति चाटु कथयन्ति पदा स्पृशन्ति
पश्यन्ति गाढमपि तत्र परिष्वजन्ते ।
कल्पद्रुमानपि समेत्य सुपर्वकान्ता
मुग्धा द्रुमैस्तदितरैश्चिरविप्रलब्धाः ॥ १७ ॥

अस्ति च तामधिवसन्, वसन्त इव ऋतूनां, वासुकिरिव फणाभृतां, चन्दन इव वृक्षाणां, चन्द्रमा इव ऋक्षाणां, राजा सुपर्वणां, राजा त्रिविष्टपस्य, राजा त्रयाणां जगतां, राजा विध्यण्ड-मण्डलस्य, कर्ता शताश्वमेधानां, संहर्ता वृत्रासुरस्य, रम्भादि-विविधरम्भोरुसंमदर्हप्रथमिकासंभुज्यमाननवयौवनश्रीः, अपर्यु-षितयौवनोन्मेषसंभावनीयमदनमदारम्भसीमायाः कौमारहरः सदा शचीदेव्याः, काव्यागमभरतगान्धर्वरहस्यसर्वकषमनीषावि-

---

१५ हरेः इन्द्रस्य शासनात् ॥ १६ प्रियागमनवेलाया मण्डयन्ती मुहुर्मुहुः । केळीगृहं तथात्मानं सा स्याद्वासकसज्जिका ॥

शेषनिरवद्यविद्याधरीलोकनखमुखमुखरितविपञ्चिकानिनादप्रपञ्चितोदारनिजभुजापदानसमाकर्णनसमुद्दीर्णपुलकानिर्वर्णनजनितामर्षजल्पाकनिखिलदिक्पालवदनावलोकनसफलीकृतसहस्रलोचनः, चतुर्मुखमुखवलयविहारिभारतीपरिगृहीतवैतालिकाधिकारः, पक्षपातासहिष्णुतयेव परिहृतशैलेन्द्रपक्षमण्डलः, चन्द्रचूडचरणारविन्दपरिचरणानन्दसाम्राज्यधुरंधरः पुरन्दरो नाम ॥

श्लथे नीवीबन्धे सति रहसि यत्पाणिवलना-
न्नवोढाः पाणिभ्यामपि पिहितसप्ताष्टनयनाः ।
सहस्रस्याप्यक्ष्णां युगपदपिधानाक्षमतया
पुनस्ताभ्यामेव स्वमपिदधते लोचनयुगम् ॥ १८ ॥

अपि च—

लभ्यन्ते श्रुतिपाठशुष्कवदना विप्राः पदे वेधसो
वैकुण्ठे तुलसीवनानि सुलभान्यार्द्राणि शुष्काणि च ।
प्रेता भूतगणाश्च सन्ति शतशः स्थाने भवानीपतेः
रत्नान्यप्सरसः सुधेति तु पदे यस्यैव लब्धुं क्षमम् ॥१९॥

विधातुं कर्माणि व्यवसितवती यत्पदफला-
न्यसूयान्धा मध्ये श्रुतिरपि किमासीद्भगवती ।
अनुष्ठेयं कर्म स्वयमनभिसंधाय फलमि-
त्ययं वन्ध्यः पन्था यदनुपदमेव प्रकटितः ॥ २० ॥

---

पक्षपात एकस्मिन्नधिका प्रीतिरन्यस्मिन्न्यूना च । राज्ञा हि निष्पक्षपातेन भवितव्यमिति धर्मः । अत एवेन्द्रः पुरा शैलेन्द्राणां पक्षं चिच्छेद । उत्पन्नपक्षत्वे च पुनः पक्षान्न ते पातयिष्यन्ति । ५४ पक्षपातासहनमाविष्कृतमिन्द्रेण ॥

किं बहुना—

लब्धुं तत्पदमूर्जितं शतमखी तस्यैव नालं भवे-
द्द्रष्टुं तद्दयिताजनं दशशती तस्यैव नालं दृशाम् ।
वक्तुं तत्पुरभोगभाग्यमखिलं तस्यैव नालं गुरु-
र्मच्चेतोगतमद्भुतं कथयितुं नालं ममैवोक्तयः ॥ २१ ॥

स कदाचिदस्वप्नोऽप्याचार इति बोधितः प्रातरमरवैतालिकैः, आलोक्य निर्मलं पौलोमीकपोलदर्पणं, अभ्यर्च्य कामधेनुं, आसाद्य विविधविद्याधरीविलासपिशुनकुसुमशयनीयलोभनीयलतामन्दिरनिरन्तरोपान्तभुवं अधःपरिवर्तमानविकर्तनबिम्बनिरर्गळनिर्गळदूर्ध्वमुखमयूखसंसर्गादुष्णीकृतामन्तरन्तः उपर्युपरि शीतलां भूतलासंस्पर्शेऽपि पुराणपुरुषचरणारविन्दसंबन्धादेव भुवनपावनीममरधुनीं, निर्वर्तितनियमाभिषेचनः सिद्धचारणगन्धर्वसेविते सैकते तस्याः दहराकाशपरिपूजितदिव्यलिङ्गाकृति प्रतिष्ठाप्य चिन्तामणिमयं किमपि पारमेश्वरं लिङ्गं, अनुसंधाय तत्र नखलिखितशरच्चन्द्रचन्द्रिकासारसुन्दरं भगवन्तं मदनान्तकं, अभिषिच्य दिव्यापगासलिलैः, अनुलिप्य रोहिणीरमणहरिणमदपङ्कानुषङ्गिणा हरिचन्दनेन, समभ्यर्च्य गाङ्गेयनिकचगाङ्गेयपङ्कजैः, आराध्य सुरभिघृतधारानुबन्धिना दिव्यधूपेन निसर्गचलितरश्मि-

---

२१. तस्यैव इन्द्रस्यैव गुरुः बृहस्पतिः ।

प्रतिष्ठाप्येति ॥ अत्र परमेश्वरस्य आवाहन-स्थापन-अभिषेक-गन्ध-अर्चन-धूप-दीप-नैवेद्य-प्रदक्षिणनमस्कार-पुष्पाञ्जलि-स्तोत्ररूपा उपचाराः कण्ठत उक्ताः । अथ उद्वासनं, हृदये नाथस्य तस्य पुनर्ध्यानं च समनन्तरं प्रतिपादितं ॥

मालाकलापेन रत्नदीपेन च. साङ्गाय सायुधाय सावरणाय साभरणाय च निवेद्य सद्यःसमाहृतनिष्पीडितेन्दुमण्डलनिष्यन्दमानापर्युषितान्यमृतानि, प्रदक्षिणीकृत्य प्रणिपत्य प्रसाद्य पञ्चभिः प्रसूनाञ्जलिभिः, स्तुत्वा श्रुतिशिरोभिः, कृत्वा विसर्जनं, अथ स्मृत्वा चिरन्तनमात्मानि, विलासवीथीविहारकौतूहलेन निर्गत्य बहिः, इतस्ततो निरन्तरालमिलदाशीर्वचोमुखरगीर्वाणमुनिसंघसंकुलं, अतिकोमलाङ्गुलिदलाघातशोधितमृदङ्गनादभङ्गिभिः अधरनिवेशितापनीतवेणुभिः असकृदास्फालिताकृष्टवीणागुणाभिः आकुञ्चितऋजूकृतभ्रूलतमाविष्कृतलुप्तसिराबन्धकन्धरमन्तरेव कलमधुरमारब्धगीतिभिः द्वित्रिरास्फालितसव्यचरणमृदुरणितमञ्जीरमञ्जुलाभिरप्सरोभिरारभ्यमानतौर्यत्रिकं, अत्युद्भटवेत्रिवेत्रलताघातविद्रावितवीथीभवदमरमण्डलं, अभितोऽपि दृष्टिगोचरसंनिधापितकरितुरगपर्यङ्किकादिनानाविधवाहनग्राममालोक्य सेनामुखं, आलोकमात्रविदितेङ्गितैराधोरणैरुपस्थापितमर्णवनिमग्नमैनाकपक्षरक्षणाभ्यर्थनायागतं हिमवन्तमिवोन्नतमवदातं च कंचिदारुह्य मतङ्गजं, अङ्गजराज्यसौभाग्यदेवतयेव शरीरिण्या ताम्बूलकरण्डधारिण्या मेनकया, मदनमदकदुष्णसौवर्गकामिनीकटाक्षसंसर्गनिवारणायेव मणिचामरोपवीजनकुशलारम्भया रम्भया च सविलासमध्यासितचरमभागः, पुरोभागचलदलघुजङ्गालकरितुरगसंघजङ्गाजवद्रवदमरभटकोटिसमर्दशिथिलहारमर्दनजनितमुक्तापरागसंबन्धादिव धवलीकृतेन ससंभ्रमवलदम्बरचरनितम्बिनी-

---

स्वर्गे भवानां सौवर्गीणां कामिनीनां कटाक्षसंसर्गः सौवर्गकामिनीकटाक्षसंसर्गः ।

शोकविकीर्यमाणमन्दारकुसुमबृन्दनिःसरन्मकरन्दधारानिरासायेव मुकुटमुपर्युपरि धार्यमाणेन सर्वतः प्रालम्बमुक्तासरकदम्बशालितया समन्ततो निहितकुपितविधुन्तुदविकटदन्तक्षतविवरक्षरदमृतधारासहस्रमण्डितेन मण्डलेनेव शशाङ्कस्य महतातपत्रेण सफलयन्ननिमेषदृष्टिसृष्टिमम्भोजसंभवस्य, गन्धर्वकुलवाद्यमानबहुविधातोद्यनिनादकबळीकृताशावकाशतयेव संकुलचलितमेनासंघसंकटोन्मुक्तसिंहनादधारापथे निर्जगाम तारापथे ॥

मञ्जीरैर्नटनार्भटीमुखरितैः स्वर्वारवामभ्रुवां
मन्दस्निग्धरवैश्च किन्नरकरव्यापारितैर्मर्दलैः ।
श्लाघाश्लोकशतैश्च चारणगणप्रोद्गीयमानैस्तदा
नादब्रह्ममयीव तत्र रुरुचे नासीरसीमा हरेः ॥ २२ ॥

अपि च—

अग्रे पश्चादुभयत इति त्यक्तलोकव्यवस्थे
दिष्ट्या तस्मिन्नपि परिणते सर्वतः संमुखीने ।
सभ्रूभङ्गं नयनवलनं सस्मितं द्रष्टुकामा
भूयोऽप्यग्रे सुरपरिबृढास्तस्य पुञ्जीबभूवुः ॥ २३ ॥

गच्छन्नेव स नभसि, भसितावकुण्ठितसर्वाङ्गसङ्गलब्धपरभागभासुराभिरभिव्याप्य हृदयमधिकतया बहिर्निर्गमिष्यतः कोपानलस्य ज्वालाभिरिव पाटलाभिर्जटाभिरभिभवन्तमिव

---

मुकुटमुपर्युपरि । उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु । द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥ इति द्वितीया ॥

२२. रुरुचे रुची दीप्ताविति धातुः । चकाश इत्यर्थ ॥

तटित्वन्तमभिनवं शारदाम्भोदं, अपि च त्रिभुवनमुनिलोकवै लक्षण्यबोधिन्या शापमूलतपोलाभसंभवया कीर्त्येव त्रिपुण्ड्रेखया परिकर्मितललाटमण्डलं, अतिप्रचण्डनिजतपोऽनलज्वालाकलाप परिप्लोषमलिनितैः प्रतिशापाक्षरैरिव पारिकाङ्क्षिणां रुद्राक्षमणिभि रभिवेष्टितं, सोदरशशाङ्कसंदेशहारिकाभिस्तारकाभिरिव कर्णपुटा भ्यर्णलग्नाभिः स्फटिकाक्षगुळिकाभिरभिशोभितं, अगृहीतोत्तरासङ्ग अङ्गीकृतकौपीनमात्रपरिधानं, आस्फोटयन्तमनुपदं, अवरुन्धन्त मध्वनि मिलन्ति सिद्धवधूकुलानि, त्रासयन्तमिव कातरान् तर्जयन्तमिव शुनासीरभटानपि, गर्जन्तमिव, गायन्तमिव, नृत्य न्तमिव, स्खलन्तमिव, हसन्तमिव, हृदयारविन्दकुहरविहरदुन्मत्त शेखरभावनानैरन्तर्यादुन्मत्तमिव, स्वयमप्यवाप्तसमस्तकामतय किंचिदप्यनादृतलोकतन्त्रानुविधानं, त्रिलोचनावतारमप्यत्रिलो चनावतारसोदरं, अनसूयागर्भसंभवमप्यत्यन्तकोपनं, अतिकठि नतपोविशेषपरितोषितगौरीप्रसादसमासादितामपि कयापि विद्या धरकन्यया प्रार्थनामात्रादेव शापभीतया प्रणिपत्य समर्पितां कार्मा कनकारविन्दमयीमम्लानमालिकामानयन्तं, आपतन्तमग्रत ए निरर्गळमभिमन्त्र्य मुक्तमिव पाशुपतं शरमनतिलङ्घनीयतेजस दुर्वाससं नाम तापसमद्राक्षीत् । जानन्नपि तमनतिक्रमणीयतेजस

त्रिभुवनेति ॥ इतरेषां मुनीनां कोपेन तपःक्षयः, दुर्वाससस्तु कोपे तपोवृद्धिरिति प्रसिद्धिः । पारिकाङ्क्षी वाचंयमो मुनिरित्यमरः । उत्तरासङ्ग परिधानम् । उन्मत्तपुष्पं शेखरे यस्य उन्मत्तशेखरः शिवः । त्रिलोचनाव तारमपि परमशिवस्यावतारभूतमपि । अत्रेः लोचनात् अवतारो यस्य चन्द्र तस्य सोदरम् । अनसूया अत्रिपत्नी दुर्वाससो माता ॥

दुर्वाससं, जानन्नपि जगदेव निखिलमपलपितुमन्यथयितुं च नैपुण्यं ब्राह्मणस्य, जानन्नपि मुनिकुलन्यक्कारपरिणतां गतिं नहुषस्य, शिष्योऽपि बृहस्पतेः, शीलितमर्मापि धर्मशास्त्रेषु, परिचर्यारतोऽपि निसर्गत एव ब्राह्मणानां, आ चतुराननादा च कीटपतङ्गेभ्यस्तुल्यवदेव प्रभवन्त्या भगवत्या भवितव्यताया विलासेन त्रिभुवनाधिपत्यमदान्धीकृतलोचनो धीमानपि सहस्रलोचनो न तं प्रत्यवरुरोह, न तरामुपचचार गिरा, न तमां च प्रणनाम । अपि च न केवलं तमवजज्ञे, अपि तु पुनरसंभावितेनापि तेन वितीर्यमाणामादाय सावज्ञमेकेन पाणिना मालिकां, पश्यत एव महर्षेः, अनुपनीय मकुटतटीमनाघ्राय चान्ततः स्कन्ध एव सिन्धुरस्य निवेशयामास । निवेशितमात्रा च सा निसर्गनिरवग्रहेण वेतण्डेन शुण्डयाकृष्य निष्पिपिषे ॥

पश्यन् पदाग्रमृदितां महता गजेन
मालां प्रसादपरिपाकमयीं मृडान्याः ।
हस्तेन हस्तमभिहत्य स नित्यकोपः
कोपारुणं मुनिरधारयदक्षिकोणम् ॥ २४ ॥

वीरभद्र इव क्रुद्धे वीरमाहेश्वरे मुनौ ।
इतिकर्तव्यतामूढमिन्द्रमैक्षन्त देवताः ॥ २५ ॥

तदनु च—

यावत्सान्त्वयितुं तदन्तिकभुवं धावन्ति मन्दीभव-
त्काकुव्याकुलगद्गदस्तुतिवचोगुम्फा निलिम्पाः स्वयम् ।

तावद्देवपतिं शशाप कुटिलक्रूरभ्रमत्तारक-
भ्रूभङ्गव्यतिषङ्गदत्तभुवनातङ्को मुनिः शाङ्करः ॥ २६ ॥

येयं त्रैलोक्यराज्यश्रीस्त्वदालम्बेन चेष्टते ।
सैवाद्य त्वदमित्राणां वशमापद्यतामिति ॥ २७ ॥

आलम्ब्य दैन्यमसकृत्पदयोर्निपत्य
संप्रार्थितो मघवता स्तुवता ततोऽयम् ।
शापान्तमाह कथयन्निव लोकरीत्या
गोविन्द एव कुशलानि करिष्यतीति ॥ २८ ॥

तदनु यथागतं गते दुर्वाससि, तावता वैभवेन विनिर्गतोऽप्यतर्कितोपनततदीयशापसमुत्सारितोत्साहः, समग्रेण मण्डलेन निर्जिहानो राकाशशाङ्क इव राहुमुखे पतितः, सुरपतिः अभितःप्रमार्ज्यमाणरोषविषादमन्दाक्षशबलकटाक्षसहस्रनियमितव्यापारममुखरमुरजमनाहतपटह अक्वणितवीणादिवादित्रं अवसन्नकिन्नरीगानमप्रवृत्तरम्भादिनृत्तसंरम्भं अवसितवैतालिकलोककोलाहलं अप्रसक्तवेत्रिहाहारवं अनाशङ्कितभटसिंहनादं अस्तंगतान्योन्यसंकथं असंभावितपीठमर्दकविदूषकालापं, अश्वहेषितेऽपि सातङ्कसादिकुल, अङ्घ्रिविन्यासशब्देऽपि सापराधसौविदल्लजनं, अपनीतमातङ्गघण्टावलयं, आबद्धमिव मूकमिव बधिरमिव मुग्धमिव प्रसुप्तमिव विकलमिव शून्यमिव. विन्यस्तमिव

---

किंचिदून पीठमर्दो हास्यप्रायो विदूषकः । इति प्रतापरुद्रीये ॥
सौविदल्लाः कञ्चुकिन. इत्यमर ॥

चित्रफलके, निखिलमपि विबुधबलमाकर्षन्नेव केवलं, आगत्य पुनर्नगरं, आवेद्य वृत्तमिमं गुरवे वृत्तान्तं, अन्तःपुरं प्रविश्य, दुरन्तचिन्तानुबन्धनियन्त्रितः शयनागार एव जजागार तां रजनीम् । अथ तदानीमेव गूढनिहितचारनिवेदिततापसशापवृत्तान्तमाकर्णनलब्धान्तरेण मन्त्रिणा भार्गवेण समादिष्टाः, हृष्टाश्च चिरनिरीक्षितरन्ध्रलाभेन, दर्शयिष्यन्तो दृढपरिचितानि समरकौशलानि, सफलयिष्यन्तः साधितानि महास्त्राणि, समुल्लिखन्तो वैरनिर्यातनप्रकारान्, अपनेष्यन्तश्चिरनिरूढमपयशोमालिन्यं. अभिनन्दन्तो दुर्वाससं, आवेदयन्तः परस्परमभ्यग्रदृष्टानि शुभनिमित्तानि, विवृण्वन्तो वीरवादान्, विभजन्तः प्रतिसैन्यानि सैनिकानां, अवरुन्धन्तश्चारजनसंचारं, आसूचयन्तो गन्तव्यपदमाप्तवर्गेषु केवलं, आदिशन्तश्च घण्टापनयनमनेकपानां, अङ्गदासंघट्टनमश्वोरसानां, अनुच्छ्रयणं ध्वजानां, अवादनं वादित्राणां, अक्ष्वेळनं च योधानां, अभिवन्द्य पुरोधसं, अनुमान्य योधमुख्यान्, आमन्त्र्य गुरुजनं, अनुज्ञाप्य मौहूर्तिकान्, भावयन्तः प्राचीनान् महासुरान्, पठन्तश्च तेषामेव वेदापहरणवसुधानिमज्जनादीनि प्रचण्डानि चरितमङ्गलानि, प्रस्थाय दानवाः कतिचिदतिचिरोपरुद्धकण्डूलदोर्मण्डलतया कालविपाकपचेलिमया शक्तिमत्तया च, पर्यवसाययितुमिव भूधरानङ्गुलिस्फोटेन,

---

तां रजनीं जजागार । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया ॥

अश्वानामुर इव अश्वोरसम् । अग्राख्यायामुरस इति टच् । उरःशब्दो मुख्यवाची ॥

परिक्षेप्तुमिव मुखमारुतेन सप्त सागरान्, उन्मूलयितुमिव समूलमेव पातालं, उत्क्षेप्तुमिव दूरमन्तरिक्षं, व्यत्यासयितुमिव विध्यण्डमण्डलं, निर्वापयितुमिव चन्द्रार्कदीपिकां, दग्धुमिव दहनमपि, भङ्क्तुमिव प्रभञ्जनमपि, बन्द्धुमिव पाशिनमपि, हन्तुमिव दुर्दान्तमन्तकमपि, संनह्यन्त्या किंचिदप्यज्ञातकार्यविशेषतया महामात्रकरचलनमात्रपरिज्ञातगन्तव्यदिशा, गगन एव नित्यनिवासेन कदाप्यनागतां मन्दाकिनीं संभावयितुमापतता पत्येव वाहिनीनां, महत्या सेनया साकमागत्य शाखानगरममरावत्याः युगपदाहन्यमानपटहादिबहुविधवाद्यनिर्घोषपोषितकरिलोकबृंहितोपबृंहितभटकोटिसिंहनादकोलाहलेन बोधयामासुरनाशङ्कितपरिभवातङ्कसुखशयितानमृताशनान् ॥

क्रुध्यद्दानवयोधनिर्दयकरव्यामर्दभीमध्वन-
ह्नानातोद्यनिनादकातरपरिक्रन्दद्दिगन्तद्विपम् ।
जातं प्रातरतर्किताागतमहातङ्कप्रमङ्गक्षण-
प्रक्षुभ्यत्पुनरुद्भटामरचमूनीरन्ध्रमैन्द्रं पुरम् ॥ २९ ॥

अपि च—

संरुन्धन्ति द्विषन्तो नगरमिति समायान्ति रुष्टाः पथीति
प्राकारान्तः प्रविष्टा इति चलति रणो दारुणः संप्रतीति ।
जीवग्राहं गृहीतः सुरपतिरिति च स्वैरमज्ञातमूलाः
सङ्घे सङ्घे प्रजानां नवनवमभवन् भिन्नभिन्नाः प्रवादाः ॥ ३० ॥

---

३० जीवग्राहं गृहीतः । 'समूलाकृतजीवेषु हन्कृञ्ग्रहः' इति णमुल् ॥

तत्क्षणं च युगविगमसमयसंभिद्यमानसप्तार्णवीनिनादशङ्का-वहेन कोलाहलेन नागराणामवबुध्य विद्विषामभिषेणनं, अनुल्लङ्घ-नीयतापसशापानुसंधानकुण्ठीकृतोद्यमोऽपि कण्ठीरव इव करि-लोकबृंहितेन परिज्वलितमन्युः, शतमन्युः उत्थाय शयनीयात्, उत्प्रेक्षितसमरसंरम्भया शचीदेव्या ससंभ्रमस्नेहसाध्वसोद्वेगमुप-सृत्य स्त्रीस्वभावसुलभेन कातर्येण 'मानद, मा कुरु साहसमे-वंविधं, प्रेष्यन्तां प्रेषणीयाः' इत्यभ्यर्थ्यमानोऽपि तामवधूय, परिजनवधूकरोदस्तविस्रंसमानसंव्यानपल्लवः, संरम्भशिथिलपद-क्रमः समागम्य चकितसमुद्बुद्धदौवारिकजनोद्घाट्यमानकवाटिका-मूलपुञ्जीभवदनुक्षणायातचारवृत्तान्तसमावेदनसंनह्यत्कुब्जवामन-जननिरन्तरालिन्दमन्तःपुरद्वारं, अनादृत्य किङ्करकरावलम्बनं, अनालोक्य निहितामप्यग्रतो मणिपादुकां, अनादिश्य सैनिका-गमनं, अनाकाङ्क्ष्य वैनीतकानयनं, अङ्घ्रिभ्यामेव परिक्रामन्, अनाकर्णयन्निवृत्तिविज्ञापनान्यध्वनि मिळतां सैनिकानां, आकु-ञ्चिताभ्यां भ्रूलताभ्यामाकम्पितेन च मुखेन केवलमाकर्णयन्वच-नानि चाराणां, अतिसंभ्रमोपसृत्वरमनिवर्त्यसमरसंरम्भमग्रत एव चलन्तमात्मजं जयन्तमवरुध्य शपथशतैरन्तःपुररक्षणाय निवेशयन्नालयद्वारि, निःसरन्नपि बहिस्ततोऽप्यतित्वरितमालय-बाह्यकक्ष्यासमानीतामाबध्य कक्ष्यां, आद्यवीथीमुखोपनीतामादाय

'यत्सेनयाभिगमनमरौ तदभिषेणनम्' इत्यमरः ।

'परम्परावाहनं यत्तद्वैनीतकमस्त्रियाम' इत्यमरः ।

कक्ष्या कच्छपुटापरपर्याया काञ्ची ।

द्म्भोळिं, अर्धपथोपनीतमवमुच्य वारवाणं, अधिगोपुरसदेशमानीयमानमारुह्य मातलिसनाथं रथं, अतिलङ्घ्य संकुलचलदमरभटसंघसंकटं दुर्गमं गोपुरद्वारं, अतिक्रम्य निजमपि नासीरं अवगाहमानो दानवचमूं, अलङ्घनीयवचनैरहंप्रथमिकाप्रतिज्ञातविजयैर्दिक्पतिभिर्निरुध्यमानः, चन्द्रोदयारम्भसमुज्जृम्भितसागर इव वेलानियन्त्रितः, क्षणादुद्ग्रीविकाभिलक्ष्यमाणदुर्निग्रहसमराग्रहः शरीरेण केवलमवातिष्ठत सेनामुखे ॥

भीमं भीमेन तस्याथ सैन्यं सैन्येन विद्विषाम् ।
समगच्छत कल्पान्ते सागरेणेव सागरः ॥ ३१ ॥

किंच—

यावज्ज्यावलयावलीढशिखरक्रूरप्रकारध्वन-
च्चापव्यापृतपाणिभिः स्थपुटितं नासीरमासीद्भटैः ।
तावद्देवपतिः क्व दानवपतिः क्वेति प्रवृत्तैः क्रुधा
सेनारक्षिभिरेव तत्र महते युद्धाय बद्धा मतिः ॥ ३२ ॥

तदनु शुनासीर एव स्वनासीरमुपेयुषि, चिरभुक्तभर्तृपिण्डानृण्यसंपादनावसरलाभसंभावितोत्साहतया तृणीकृत्य जीवितानि विमतबलानीव, विधूय समरभयं विकोशानीव शस्त्रास्त्रमण्डलानि, विस्मृत्य भर्तृविमाननाः कादाचित्कीः पुत्रदारपरिभवानिव, मनागप्यनपेक्ष्य जयश्रियमनुपतन्तीमिव मित्रवरूथिनीं,

वेला समुद्रतीर कालश्च ।
अवातिष्ठत 'समवप्रविभ्यः स्थ' इत्यात्मनेपदम् ।
समगच्छत 'समो गम्यृच्छिभ्याम्' इत्यात्मनेपदम् ।

होष्यन्तः शरानलार्चिषि शरीराणि, चेष्यन्तः शरदिन्दुसुन्दराणि यशःकन्दळानि, महिषानिव मतङ्गजान्, सारमेयानिव सैन्धवान्, पांसुकणानिव पदातिगणान्, मशकानिव महारथिकान्, कुसुमविहारानिव कुन्ततोमरमुद्गरप्रहारान्, पटवासवृष्टिमिव बाणवृष्टिमपि मन्यमानाः, हन्यमाना अपि हर्षाट्टहासमुखराः, नखरायुधा इव हरिणार्भकेषु, नागान्तका इव राजिलेषु, दन्तावळा इव कदळीवनेषु, दावानला इव जीर्णशल्मलीगुल्मेषु, निःशङ्कमवगाहमाना दानवेषु, प्रहरन्तः परश्वधैः, कृन्तन्तः कुन्तैः, निपातयन्तः कृपाणिकाभिः, अभिघ्नन्तः शतघ्नीभिः, खण्डयन्तो भिण्डिपालैः, अवकिरन्तः शरजालैः, अपविध्यन्तः शक्तिशूलैः, क्षिण्वन्तः क्षेपणिकाभिः, अवबध्नन्तः पाशैः, अभिमृद्नन्तः परिघैः, आकर्षन्तो लाङ्गलैः, आविध्यन्तो मुसलैः, अपहरन्तो जयध्वजान्, अवभिन्दन्तो वारवाणान्, विच्छिन्दन्तो धनुर्गुणान्, विस्रंसयन्तः सारथीन्, प्रवर्तयन्तो रक्तवाहिनीः, परितोपयन्तः कटपूतनाः, लिम्पन्तः शरीराणि रक्तधाराभिः, आवेष्टयन्तः करेष्वान्त्रमालिकाः, परिक्रामन्तो मुण्डमण्डलेषु, परिस्खलन्तः कबन्धेषु, अपश्यन्तः पुत्रानपि रणे हतान्, अतृप्यन्तो यूथंयूथमपि निपात्य प्रतिभटान्, अप्रतिभटा विबुधटाः साफल्यमनैषुरक्षिसाहस्रममरपतेः । आदिश्य च ततः शतमन्युरन्तकमग्रतः सेनामुखे, पार्श्वयोरम्य पवनपावकौ, पृष्ठतः स्वस्य पुण्यजनेश्वरं, अन्तिक एव धनदमाहवशूरान्

---

कटपूतनाः पिशाचविशेषाः ।

सभाजयितुं, अध्वनि शिबिरे च विद्विषामपांपतिं, आयुधक्षतान् भिषजयितुमाश्विनेयौ, निशीथयोधिनीनां वैरिवरूथिनीनां निशैव मा भूदिति सन्ततवासरभावाय सहस्रभानुमप्यभितः प्रकाशितुं; प्रतीक्षमाणोऽपि जयश्रियं, परिशङ्कमानश्चेतसि तापसशापविपाकमाकस्मिकं, किमप्यलीकनभोविभागसीमाधिपत्यलक्षणां लक्ष्मीमुद्दिश्य कलहायमानयोरमरासुरवाहिन्योरज्ञानविजृम्भितोपालम्भसंभवमट्टहासमिव परमेष्ठिनो घनस्तनितमनभ्र एव दारुणमशृणोत् । प्रहितोऽपि सेनामुखे पवनः पदे पदे यदावेद्यमावेदयितुमाववृते तदेव तस्य प्रतिकूलपवनलक्षणं दुर्निमित्तं परिणेमे । अस्रंसत च करादस्य दम्भोळिः, तदप्यायुधविस्रंसनमशनिपतनं चेति द्वेधा बभूव दुश्शकुनम् ॥

अत्रान्तरे रणहतोभयसैन्ययोध-
निर्भिन्नमण्डलतया तपनः समन्तात् ।
उद्दामदानवधनुर्गळदुत्प्रबन्ध-
नाराचदारिततया च शनैस्तिरोऽभूत् ॥ ३३ ॥

अतिप्रबन्धादिषुजालवृष्टेरपक्रमाच्च द्युमणेरकाण्डे ।
आसीत्तमिस्रा जयदा रिपूणां पचेलिमा भाग्यपरम्परेव ॥ ३४ ॥

तत्क्षणं च पुनरनुक्षणोपचीयमानममरबलं, अपक्षीयमाणमात्मबलं च निरीक्षितुमप्यतितिक्षवः, तरक्षव इव बुभुक्षिताः, दन्दशूका इव दण्डघट्टिताः, बलिबाणशम्बरजम्भनमुचिविरोचन-

मुखा महासुराः सरभसमवमुच्य वारवाणं, अवबध्य गोधाङ्गुलित्राणं, अपिनह्य निषङ्गमक्षयशरपूरितोत्सङ्गं, अधिरुह्य शताङ्गमायोजितखरतुरङ्गं, आवध्य निटिलेषु भ्रुकुटीविभङ्गं, आसेव्य वीरपाणं, आलम्ब्य संशप्तकव्रतं, अनुज्ञाप्य परस्परं, आपूरयन्तो दिङ्मुखानि गुणध्वनिभिः, अवभ्रंशयन्तो गगनतलादुड्डून्यट्टहासैः, विसंज्ञयन्तः खड्गविच्छुरणेन वीक्षितुमागतानि सिद्धचारणमण्डलानि, विस्मापयन्तः समरसंरम्भेणैव कर्मन्दिनमपि कलहानन्दिनं, उत्सारयन्तः पादातमूरुवेगेन, परिचूर्णयन्तो रथान् परिघाभिघातैः, विद्रावयन्तो हयान् करताळिकाभिः, विघूर्णयन्तो मतङ्गजानङ्कुलीयन्त्रणेन, संवर्तमारुतावर्तितसागरगर्तदुर्दर्शवक्त्रविवरोल्लसल्लेलिहाननिजरसनावलोकनजनितसाध्वसध्वस्तचेतनमासाद्य सेनामुखे निविष्टमन्तकं, अपहृत्य तदीयमेव कालदण्डममोघं अभिहत्य तेनैव तं, आदिमं जयमापेदिरे ॥

कालदण्डहतस्यास्य कण्ठे प्राणा जुघूर्णिरे ।
अन्तकं यद्धतं नेतुमन्तकोऽन्यो न विद्यते ॥ ३५ ॥

पार्श्वतस्तस्य परे केचिदतिचिरोपरोधसंवर्धितप्रतिघानलव्यतिकरविशेषभीषणज्वालाकलापदुरापमपि परिवृत्य जातवेदसं, प्रशमय्य परुषहुंकारभयकरैर्मुखमारुतैरस्य दुःसहं ज्योतिः, अपकृष्य वाहनं मेषमग्रचरणग्राहं, आहृत्य शक्तिमपि बलादस्य हस्ततलान्, 'अरे रे लब्धोऽयमन्नहरः क्रतुभुजां हव्यवाहो नाम

संशप्तकास्तु समयात्संग्रामादनिवर्तिनः ।

निर्जरापशदः, तदद्य निर्वापयतैनमुदकुम्भैः, निक्षिपतैनमापूपिकानां वशे महानसेषु, मैवं मैवमुद्बोधयतैनमुचितैर्मुखमारुतैः, हस्ते कुरुत चैनमद्यैव दग्धुममरावतीं, परित्यजत रे रे बालिशा! बाडवोऽयं शिखां प्रदर्शयति' इति परिहसन्तः परिक्षिपन्तस्तर्जयन्तस्ताडयन्तश्च पलाययामासुरसुरभटाः। ततः समित्याहितमसुरभटैस्तदुत्पाहितमालक्ष्य सख्युराशुशुक्षणेः, क्षणेन सज्जीभूय भूयसा वेगेन सव्यापसव्यानि संचरन्मण्डलानि, चण्डलाघवोत्क्षिप्ततरुकाण्डखण्डसाहिण्डमानोपलखण्डताण्डवोद्दण्डं, अतिसंभ्रमभ्रमितपांसुमांसलतृणपूलसंघसंगतकङ्कगृध्रवायसादिविहङ्गमं, अतिविशङ्कटशंकरशिरोघटितविकटजटाजूटसंकटभ्रमदभ्रपरिज्जलनिर्झरझलझलघोषभीषणझंकारमुखरितनभोविभागं, आलम्ब्य युगविगमोचितं रूपं, आपतन्नसुरबले, विघूर्णयन् जीर्णपर्णमिव दिक्षु विदिक्षु चाश्वीयं, अवचूर्णयन् रथषण्डमारण्यमिव तरुकाण्डं अवकिरन्नुपलखण्डानिव मदोत्खण्डानपि वेतण्डान्, अन्धीकुर्वन् पदातिजातं, अवरुन्धन् सेनापतीन्, परावर्तयन्नस्त्रशस्त्राणि, प्रभञ्जयन्नञ्जसैव जयध्वजान्, परिस्खलयन्महासुरानपि, संवर्त इव मारुतः समरसीमनि सर्वतोऽप्यक्रमेण पराचक्रमे। यावदित्थमस्पन्दत गन्धवाहः, तावदावर्तितलोचनो विरोचनः, प्रकटितसमराडम्बरः शम्बरः, सावष्टम्भो जम्भः, समरमदोल्बणो बाणः, संग्रामैकरुचिर्नमुचिः, अतिबली च बलिः, आलक्ष्य वक्त्राणि

---

बाडवः ब्राह्मणः और्वाग्निश्च। 'अत्याहितं महाभीतिः' इत्यमरः। अश्वीयं अश्वसमूहः। पराचक्रमे उपपराभ्यामित्यात्मनेपदम्।

परस्परं, ईषदिव स्मयमानाः, विस्मयमानाः पराक्रमे विबुधानामिदमूचिरे । हन्त कथममरा अपि पराक्रमन्ते, तेषु च दूत्योचितसंचारमन्थरः श्वा मातरिश्वा ॥

संरुन्धते निभृतमन्तरपि द्विजा य-
मन्नं यमाहुरपि कीटसरीसृपाणाम् ।
यो जायते शिथिलशूर्पपरिभ्रमैर-
प्योजायते कथमसावपि गन्धवाहः ॥ ३६ ॥

अथवा नैनावदस्मिन्नभिनिवेष्टव्यमस्माभिः । अनुकूल एव खल्वयमस्माकमाशुगानलज्वालासंधुक्षणे सर्वथापि ॥

यश्चेष्टतेऽवकाशेषु ये चाप्येनं समाश्रिताः ।
निरुन्धीमहि तान् सर्वान्नीरन्ध्रे शरपञ्जरे ॥ ३७ ॥

इति कतिपये दैत्या वात्यानिबर्हणकौतुका-
द्धनुरनुगुणं यावज्ज्यावल्लिभिः सह युञ्जते ।
प्रसभमभितस्तावत्सावज्ञदैत्यभटोज्झिता
दिशि दिशि जगत्प्राणप्राणच्छिदो न्यपतञ्छराः ॥ ३८ ॥

वाय्वर्कशक्रवरुणानलदैवतान्य-
प्यस्त्राणि निर्जरवरैरभिमन्त्रितानि ।
ईशांबभूवुरसुरेषु न शासनानि
राज्यच्युतस्य नृपतेरिव नागरेषु ॥ ३९ ॥

---

३६. ओजायते ओजस्वीवाचरति ।

दनुजभुजविकृष्टकोदण्डदण्डोपसंपातुक-
ज्वलदनलदुरापनाराचधारासमीराहताः ।
युगविगमसमुच्चलच्चण्डचण्डीशभूषोरग-
प्रतिभयमुखवातजातां दशामुज्झगुर्निर्जराः ॥ ४० ॥

प्रचण्डे च वलति पवमाने, तूलवदुत्सार्यमाणेषु दूरत एव वारिधरेषु, सागरानपि शोषयतस्तस्य सनीडमागन्तुमनीहमानेषु च यादोगणेषु, स्वात्मैकशेषतया भग्नचेताः प्रचेताः, प्राकृतलोक-साधारणस्तटस्थ एव बहिरवतस्थे । अपि च रिपुचमूसमूहस-मुत्सृज्यमानशरवर्षधर्षितेषु वर्मसु, भिद्यमानेषु चर्मसु, कर्मदेवाः 'कस्मादयमस्माकमाकस्मिको बुद्धिविपर्ययः, कस्मै वयमसुरैर्युध्या-महे, कस्य हेतोर्वध्यामहे, बुध्यामहे न हेतुमस्मिन्नायासे, के नो देवाः के च नो दानवाः, सभृत्य तपांसि दुश्चराणि संप्राप्ता वयममरपदं, केन शक्या निग्रहीतुं, केन शक्या अनुग्रहीतुं, अधिष्ठास्यति यः स्वर्गं, अतिथयस्तस्य वयं भवाम' इति कृतनिश्चयाः संमन्त्र्य परस्परं सघशोऽपचक्रमुः समन्ततोऽपि समरमुखात् । अथ ये केचिदाहवमखे हुतशरीरा दनुजवीरा देव-भावमापद्य दिवमारूढा गूढाभिसंधयस्ते किल सहृदया इव कंचित्कालमहृदया एव परिक्रम्य, परिज्ञातमर्माणः सर्वतो निर्वा-पयामासुरतर्किता एव गीर्वाणबलम् । अपसरतः कर्मदेवान्, अभिन्नतो दैत्यदेवान्, आपततः शरानाशीविषानिव दृष्टिविषान्, उत्सर्पतो विशृङ्खलमसुरभटानुल्लङ्घितवेलानिव कल्लोलान्महोदधेः,

सनीडं समीपम् ।

अप्रभवतः सेनापतीन् , अप्रतिपत्तिमूढमपि पश्यन्तः स्वामिनं, अपश्यन्तस्त्रातारं, अवशा देवमुनिशापतेजसा प्रविश्य हृद-यानि प्रक्षोभ्यमाणाः, स्तब्धा इव, मुग्धा इव, दग्धा इव विषा-नलैः, दिग्धा इव मोहनचूर्णैः, लुब्धाः परं जीवितेषु, लब्धामपि जयश्रियं चिरादीपद्विवेकसुनियन्त्रणेन क्षणिकदुर्मन्त्रणेन विनाश-यन्तः, पश्यन्तोऽप्यचक्षुषः, शृण्वन्तोऽपि बधिराः, जानन्तोऽपि जडाः, परिगृहीता इव दुर्यशसा, परिष्वक्ता इव भाग्यविपर्ययेन, विस्मृत्य कुलशीलानि, विसृज्य निःशेषमपत्रपां, अवरोप्य निषङ्गं, आवेशयन्तः पृष्ठतो बुद्धिं, अवमुच्य जयायुधानि, आददाना भिक्षाकपालानि पाणिभिः, आसर्गादा च महाप्रळयादध्वरहवि-र्भिरेव द्विजन्मनामविश्रान्तपरिपुष्टतयेव, प्राप्ते समरे सायुधाश्च, सवाहनाश्च सैकता इव सेतवः, सर्वतोऽपि विजघटिरे विबुध-भटाः ॥

धावद्दैवतयोधयूथपदवीसंरोधकौतूहल-
क्रामड्डामरघोरवैरिपरिषन्नासीरसीमोद्भवैः ।
भेरीभांकरणैरमर्त्यनगरीसंवर्तमौहूर्तिकैः
संभ्रान्ताः प्रतिपेदिरे युधि निवृत्ताशा दिगीशा दिशः ॥

वल्मीकेष्वहयो वसन्ति मुनयो घोराः समीराशनाः
कान्तारेषु च कन्दरेषु लवणे सिन्धौ क्व वातास्थितिः ।
आक्रान्ते भुवने परैस्तृणमपि स्प्रष्टुं न शक्यं मया
किं कर्तव्यमिति व्यलीयत जवाद्दैत्याशुगेष्वाशुगः ॥ ४२ ॥

अनन्तरमित्थमतर्कितमनिमित्तमपध्वंसमानमसुरबलमभितोऽपि विप्रकीर्णमिव भुवि निपत्य गगनतलं परिवहद्भिन्नमर्यादमर्णवस्रोतः, शतशः परीक्षितमपि सौहार्दे सहस्रशः गृहीतजयमपि समरसंमर्दे, कदाप्यशिक्षितायुधग्रहमिव अनाकर्णितसंग्रामसंकथमिव, वायसयूथमिव, वानरानीकमिव, केरळसैन्यमिव, ग्रामपालकजालमिव, करतालिकामात्रकातरममर्त्यबलमप्यालोकयन्, दशभिः शतैरक्ष्णां वासवः स्वयमेवमालोचयामास । अहो दुर्वाससो ब्राह्मण्यं, अहो निगमागमप्रामाण्यं अहो पाशुपतेषु माहात्म्यं, अहो दुर्निमित्तेषु याथार्थ्यं, अहो कर्मपरिणतेः प्राबल्यं, अहो देहिषु श्रियश्चाञ्चल्यं, अहो पुरुषकारस्य वैफल्यं, अहो परमेष्ठिनः कौशल्यं, आहवो नाम कियन्नयं, असुरा नाम कियन्त इमे, कीदृशाः पलायन्ते, कीदृशः पराक्रमन्ते, किं बन्धुभिः, किं सचिवैः, किं बलेन, किं धनेन किमनेन दम्भोळिना, किमन्ततोऽपि मया, कथं द्रक्ष्या दाराः कथं द्रक्ष्याः पौराः, किमितो निहतेन जीवितेन, किं करिष्यामि विपरीतो विधिरितोऽपि, न चिकीर्षामि सौवर्गमाधिपत्यं, जिहीर्षामि दानवानामौद्धत्यं, यावदीदृशोऽहं न कस्यचिद्दृग्गोचरे पतेयं तावदस्मिन्नेव समरे तनुं त्यजामीति मनः पुरश्चरन् शचीपतिरशृणोदन्तरिक्षगां वाणीम् ॥

अहो ते शक्र धीमान्द्यमग्रे भाव्यं किलान्यथा ।
अन्तर्धेहि रणादस्मादन्तर्धेहि च मन्दिरम् ॥ ४३ ॥

इत्याकाशगिरा शक्रो मत्या च क्रूरया स्वया ।
यावद्दोलायते तावदागत्याबोधयद्गुरुः ॥ ४४ ॥

हन्त कथमेतदमरपते धीमतोऽपि ते दुर्व्यवसितम् । अविदितं न ते वेदितव्यं, अवशेषितं वा गुरूणामुपासनं, किं न जानासि भवितव्यतां, किं वाभिमन्यसे जयश्रियो नैयत्यम । ननु श्रूयत एव पुराणेषु भवता, यत्किल मालिसुमालिसङ्गरे महति परिवर्तमाने पराचीने पतगपतौ भगवतापि परावृते । अन्धकेन किलेदमधिष्ठितं त्रैलोक्यम । विध्यण्डान्येव कियन्ति विजितानि तारकेण । तदलमनुस्मर शापान्तवचनमत्याश्रमस्य मुनेः । भवेयुरपि कदाचिदन्यथा भाषितानि महेश्वरस्य, न तु जातु माहेश्वराणाम् । यत्पुरोदितं गोविन्द एव कुशलानि करिष्यतीति महर्षिणा, तदनूदितमग्रे भवितव्यमन्यथेत्यधुना परमेष्ठिना । तदेहि कंचित्कालमन्तर्हिता एव कचिदावसाम इत्यनुशिष्य शिष्यमन्तर्धाप्य स्वयोगमायया तिरोदधे स्वयमपि देशिको देवतानाम् ॥

विद्राणे वरुणे गते हुतवहे वैवस्वते मूर्च्छिते
सद्यो लोचनगोचरादपगते संक्रन्दनस्यन्दने ।
संवर्तव्यतिषक्तसप्तजलधिस्रोतःप्रभूतध्वनि-
स्फारः कोऽपि बभूव दानवबले हर्षाट्टहासध्वनिः ॥४५॥

चकितपलायितस्खलितमूर्च्छितनिष्पतित-
क्षतविबुधानुधावननिषेधिमहारथिकम् ।

विजहि जहीहि पाहि निगृहाण गृहाण हरे-
त्युपचितनादमेदुरमवर्तत दैत्यबलम् ॥ ४६ ॥

अपिच—

आवृत्यावर्तयन्तो दिशि दिशि तुरगान्वारणान्वारयन्तो
मुष्णन्तो भूषणानि प्रसभमभिनिपत्यायुधान्याहरन्तः ।
घ्नन्तः संतर्जयन्तः पथि पथि विबुधान्मुक्तकेशान्दिगीशा-
नभ्येत्यामन्त्रयन्तः प्रजहसुरसुराः सर्वतो निर्विशङ्कम् ॥४७॥

किंच—

शस्त्राशस्त्रिक्षतपतिसुतालोकशोकावलुप्त-
प्राणस्त्रैणव्रजमशरणध्वस्तलुप्तापणान्तम् ।
धावद्देवप्रवरसमरोदन्तयाथार्थ्यबोध-
भ्राम्यत्पौरं नगरमभवज्जर्जरं निर्जराणाम् ॥ ४८ ॥

ततो मुहूर्तादेव मूर्ता इव कोपानलविस्फुलिङ्गा मुनेर्बलि-मुखा मखद्विपः पराक्रमेण महता परिक्रामन्तस्तिरोहिते मरुत्वति द्रागेव रणमूर्धनि पलायित इति प्रमीत इति प्रविष्टोऽमरावती-मिति च तादात्विकैः प्रवादभेदैस्तत्वमनवबुध्यमाना अपि, भवतु नाम सर्वथैव वयं प्रविशेम तावदमरावतीं, परिशोधयेम ततः प्रवृत्तिं शचीपतेः, अपहरेम सुरकामिनीः, अवस्कन्देम कोशमन्दिरं, अधितिष्ठेम सुधर्मां, आक्रामेम त्रैलोक्यमिति

४८. शस्त्रेण शस्त्रेण प्रहृत्य प्रवृत्तमिदं युद्धं शस्त्राशस्त्रि ।
स्त्रीणां समूहः स्त्रैणम् ।

कृतनिश्चयाः, कल्पद्रुमा बलेः, कामधेनुर्बाणस्य, हास्तिकं नमुचेः, अश्वीयं शम्बरस्य, चिन्तामणिर्जम्भस्य, विलासिन्यो विरोचनस्य, वारुणं पदमस्य, वायवीयं तस्य, वैश्रवणीयममुष्य, वैश्वानरीयमेतस्य, प्रविष्टं प्रवेष्टुः, अपहृत्य लब्धमपहर्तुः, प्रहृत्य लब्धं प्रहर्तुः, आलोकितुरालोकितं, उपायवक्तुरर्धं, उत्तरसाधकस्य तदर्धं, समसमयप्रवृत्तयोस्तु साधारणं वस्तु, परतस्तु यथारुचि परस्परच्छन्देनेति समयबन्धेन पर्यवस्थाप्य पताकिनीं, आरुह्य मतङ्गजानत्युन्नतान्, आलोकयन्तो नगरोपशल्यानि, प्रशंसन्तः प्राकारदुर्गसामग्रीं, परिहसन्तो बुद्धिलाघवं प्रतिद्वन्द्विनां, निर्दया विपक्षजातीयेषु, निर्विशङ्का दुर्गगुल्मेषु, ग्राहयन्तो वधूदर्शं, घातयन्तः पुरुषदर्शं, आकर्णयन्तः कर्णामृतान्याक्रन्दितानि नाकसदां, हसन्तो दर्शदर्शमशरणान्वध्यमानान्, कुप्यन्तो दयालुषु, कुतूहलिनो दारुणेषु, विसर्जयन्तो नैर्ऋतीयान् जात्यभिमानेन, विद्रावयन्तः कर्मदेवानट्टहासैः, उन्माथयन्तो गोपुरद्वारं, उल्लङ्घयन्तः प्राकारं, अपश्यन्तः शरणागतान्, अशृण्वन्तो याच्ञाक्षराणि सुरर्षीणां, आज्ञापयन्तो जिह्वाच्छेदमसत्यालापकानां, चरणावकर्तनं चाराणां, चपेटाघातमसत्यमौहूर्तिकानां, अङ्गुलिच्छेदमक्षरलेखिनां, आस्यविदारणमसूचकानां, भञ्जयन्तः प्रतिमा देवतानां, अपमार्जयन्तः सुरपराक्रममालेख्यसमर्पितं, अकारणहन्यमानरक्तधारावसिक्तं, अजस्रचरणग्राहमाकृष्यमाणमुनिजनशरीर-

---

हस्तिनां समूहः हास्तिकम् । ग्रामान्त उपशल्यं स्यादित्यमरः । वधूमिव दृष्ट्वा वधूदर्शम् । पुरुषमिव दृष्ट्वा पुरुषदर्शम् । दर्शं दर्शं पुनः पुनर्दृष्ट्वा ।

संमृष्टं, अनुपदद्ह्यमानदेवतागारधूमधूपितं, अपकृष्यमाणकुलपालिकाजनाहन्यमानमुखवाद्यनादमेदुरं, अपहृतसर्वस्वदीनजनाक्रोशजयाशीर्वचोमुखरं, आकस्मिकपतदशनिनिर्घोषनिर्वर्तितलोहयन्त्रनिनादमङ्गळं, अभितःपतदुल्कासहस्रदीपमालापरिष्कृतमनुप्रविश्य नगरं, अभिवन्द्य पुरोधसं भार्गवं, अपक्रान्तहर्यक्षमेरुगुहासधर्मां सुधर्मामध्यासांचक्रिरे। आसीनाः क्षणममरसभान्तरे, परिष्वज्यमानाः परस्परं, प्रशस्यमाना वन्दिमागधैः, अभिनन्द्यमानाः कुलवृद्धैः, अनुगृह्यमाणा भार्गवेण, निष्क्रम्य ततो बहिरचिरपरिगृहीतविजयेन्दिरापरिरम्भसंभृतकुचकुम्भकुङ्कुमक्षोदैरिव सेनारजोभिरभिरञ्जिताः, निरङ्कुशचंक्रम्यमाणविशृङ्खलदैत्यसंघवाहावलोन्मुक्तहाहारवमालक्ष्य सर्वतो नगरं, उल्लोलजलधिकल्लोलहल्लोहलशमनशीलया वेलयेव तनीयस्या विरमतेति कयाचिदेवाज्ञया चिरलब्धसुस्थमिव पर्यवस्थाप्य नगरं, क्षणादाघोपयामासुरास्कन्दनोपरमजयकाहळीम्। आदिष्टाश्च दिक्पालपदेष्वसुरवराः स्वयमनतिक्रामन्तो धर्ममौशनसं, अनुल्लङ्घमाना बलेः शासनं, अनुवर्तमाना हिरण्याक्षदर्शितां सरणिं, अवलुम्पन्तो वैदिकं पन्थानं, अप्रमत्ताः स्वं स्वमधिकारमनुपालयांचक्रिरे ॥

देवद्विषश्चिरतरं निरयेषु मग्ना-
नुत्तार्य दैवतपदेषु निवेशयन्तः।
रक्षोघ्नमन्त्रकुशलाञ्छतशो महर्षीन्
प्रत्यक्षिपन्नरकवेश्मसु दैत्यदूताः ॥ ४९ ॥

ब्रह्मर्षयोऽपि दनुजेन्द्रसभां प्रविष्टा
मन्त्राक्षराणि मघवादिपदाङ्कितानि ।
ऊहेन दानवपदान्युपवेशयन्तो
हर्षाय पेठुरसुरेन्द्रपुरोहितानाम् ॥ ५० ॥

विद्वांसः प्रथमेऽभवन्विवसनाः सौत्रान्तिकाः साधवो
मुख्या माध्यमिकास्त्रिलोकगुरवश्चार्वाकतन्त्रे स्थिताः ।
पाषण्डा निगमागमव्यसनिनः कालः कलिः शाश्वतो
दैत्ये शासति देवराज्यमजनि त्रैलोक्यमित्थं तदा ॥ ५१ ॥

अपक्रान्तश्च तदा शचीपतिः, अभिगम्य सह सर्वैः सुपर्वभिरखिलभुवनसुन्दरं मन्दरं शैलमनुज्ञया बृहस्पतेः अन्तर्हित एव कतिचिदतिवाहयामास वर्षगणान् ॥

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुरधिकशतप्रबन्धनिर्वाहकश्रीमन्महाव्रतयाजिश्रीमदप्पयदीक्षितसोदर्यश्रीमदाच्चान्दीक्षितपौत्रेण नारायणदीक्षितात्मजेन श्रीभूमिदेवीगर्भसंभवेन श्रीनीलकण्ठदीक्षितेन विरचिते श्रीनीलकण्ठविजये चम्पुकाव्ये
प्रथम आश्वासः ॥

---

५०. ऊहो नाम प्रकृतावन्यथा दृष्टस्य मन्त्रस्य विकृतावन्यथाभावः । यथा—प्रकृतावाग्नेयचरुनिर्वापे विनियुक्तस्य 'अग्नये त्वा जुष्टं निर्वपामि' इति मन्त्रस्य विकृतौ सूर्यचरौ 'सूर्याय त्वा जुष्टं निर्वपामि' इत्यूहः । एवं 'इन्द्राय स्वाहा वरुणाय स्वाहा प्रजापतये स्वाहा' इत्यादिमन्त्राणां 'हिरण्याय स्वाहा बलये स्वाहा नमुचये स्वाहा' इत्यादिविपरिणामेन ब्रह्मर्षिभिरूहः कृतः ॥

५१. विवसनाः (दिगम्बराः) सौत्रान्तिका माध्यमिकाश्च बौद्धविशेषाः ॥

# द्वितीयाश्वासः ।

ततः शतमखादयो युधि विरोधिभिर्निर्जितां
श्रियं पुनरभीप्सवः क्रतुभुजो भुजोपार्जिताम् ।
विचित्रमणिसुन्दरं विपुलकन्दरं मन्दरं
समेत्य तपसानयन्निमिषवत्सहस्रं समाः ॥ १ ॥

तत्र च वसतां तपोधनानामध्वरहविर्भागमपहरत्सु दूतमुखेन दानवेषु. अकाले वा यष्टुमयज्ञेन वा रहसि प्रदातुमभ्यर्थनयाप्यसंमन्यमानेषु शास्त्रैकशरणेषु तापसेषु, तप्यमानाः क्षुधा विबुधाः, हुत्वा हवींषि हुतवहे, दत्तानि तेनैव पुनस्तान्युपयुञ्जानाः कालं महान्तमतिवाहयांचक्रिरे । अपरे पुनः केचिदतिवेलश्रद्धामात्रशरणानधिगम्य मूर्खान् अमुनैव शरीरेण दिवमारोपयामो भवतः सबान्धवान्, अत्रैवानीय दर्शयिष्यामः सुरसुन्दरीरिति प्रलोभयन्तः, पशुपक्षिसुराकुम्भपायसापूपप्रचुरानलभन्त महोपहारान् । अपि च पुनरवरूढान् कर्मक्षये दिवः कर्मदेवानावृत्य 'किं कुर्वन्ति दानवाः, किं वदन्त्यस्मान् कथाप्रसङ्गेषु, किमितिवृत्तमेषामनुमतं पितामहेन, किं वा न तदवतीर्णमद्यापि तस्य कर्णपथं, किमाहुरसुरमौहूर्तिकाः, कीदृशो भार्गवस्य वृत्तान्तः, कथमास्ते वैजयन्तः, कस्य वशे नन्दनोद्यानं, उद्भ्रान्तश्चतुर्दन्त इति श्रुतं, उच्चैःश्रवसः प्रवृत्तिमेव नोपलभामहे'

---

चतुर्दन्तः ऐरावतः । उद्भ्रान्तः निर्मदः । 'समावुद्भ्रान्तनिर्मदौ' इत्यमर. ।

इत्यनुयुञ्जानाश्चकितचकितमवलोक्य समन्ततः, किंच ब्रह्मलोकगमनोचितान्महर्षीन्मुमूर्षतः परीत्य परिहरन्तः प्रायणक्लेशमपि वरदानैः, निवेदयत प्रसङ्गेन नः कष्टामिमां दशां भगवति पितामहे, न विस्मरतास्मदभ्यर्थनामध्यात्मविचारव्यासङ्गेनेत्युद्बोधयन्तः, स्वयमस्वप्नतया स्वप्नदृशस्तपोधनान् परिपृच्छन्तः पर्यवसानं मुनिशापस्य, निन्दन्तः स्वानि जन्मानि, निःश्वसन्तो दीर्घमुष्णं च मुहुर्मुहुः, वलाहकमिव चातकाः, वाचस्पतेरागमनमाकाङ्क्षन्तश्चिरमवतस्थिरे ॥

अत्रान्तरे सुरगुरुर्दुरितं सुराणा-
मल्पावशेषमवयन्प्रणिधानयोगात् ।
अभ्येत्य निर्जरवरैरभिवन्द्य भक्त्या
पर्यावृतः सदसि किंचिदिदं बभाषे ॥ २ ॥

' दिष्ट्या कुशलिनो वश्चिराददाक्षम् । दिष्ट्या चोत्तीर्णप्रायोऽयमापदर्णवः । दिष्ट्या च दुर्लभमिदं तपोवनमहो भवद्भिरासादितम् । वाराणसीव भारते वर्षे दयितं गौरीदयितस्य परमभिदमेवायतनमिळावृते । आरसातलादा च शान्त्यतीतकला-

स्वप्नदृशः स्वप्नाध्यायविदः ॥

२. अवयन् अवपूर्वक-इण धातोः शत्रन्तप्रयोगः ॥

निवृत्ति-प्रतिष्ठा-विद्या-शान्ति-अतीतशान्तय कलाः क्रमेण पृथिव्यप्तेजोमरुदाकाशेषु पर्यवस्थिताः । तदुक्तम्—भूमौ निवृत्तिरुदिता पयसि प्रतिष्ठा विद्याऽनले मरुति शान्तिरतीतशान्तिः । व्योम्नीति याः किल कलाः कलयन्ति

भवनान्तानि सन्ति स्थानानि सर्वागमाविदितानि परश्शतानि भवानीपतेः । परं तु मन्दर इव तस्य दृशां न किंचन सुन्दर-मन्यदायतनम् । अन्यत्र पञ्चतपसोऽपि मुनेरात्मजयेषु शांभवेषु स्वैरचारी विशिष्यत इति श्रुतमेव भवद्भिरपि वृद्धमुखात् । अमृतप्राप्तिहेतुश्चायमस्मादृशामिव भवादृशामपि शैलराजः । किं बहुना—

कालोऽत्ययगादशुभहेतुरुपस्थितं वः
कल्याणमद्य न चिरादिति भासते नः ।
उत्तिष्ठतोच्चलत याम तु धाम धातु-
रुष्ट्रासिकाभिरधुना किमनर्थिकाभिः ॥ ३ ॥

इति प्रवृत्तया भाविमहासंविधानलभ्यया भाग्यवशादधुनैव स्वतो लब्धया सुधयेव वाचा वाचस्पतेराप्यायितः सुरपति-रिदमाचचक्षे—'अद्यैतत्पावनमजनि तपोवनं, अद्य नस्तपांसि परिपेचिरे, प्रशेमुरद्य नः कलुषाणि, पर्युपास्थिषत मङ्गलानि, परथा कथं भवदीयानां पात्रीभवेम शासनाक्षराणाम् ॥

---

विश्वं तासां हि दूरतरमम्ब पदं त्वदीयम् ॥ शान्तिं शान्तिनामकलामतीता अतिक्रान्ता शान्त्यतीता । तस्याः कलाया भवनं आकाशं, तदभिव्याप्य आ शान्त्यतीतकलाभवनात् ॥

अन्यत्रेति ॥ शिवक्षेत्रेषु स्वैरचारस्य फलमाह सूतसंहितायां शिव-माहात्म्यखण्डे चिदम्बरमाहात्म्ये—अन्यत्र पञ्चतपसो मुनेर्वाताशनादपि । श्रीमद्दक्षिणकैलासे स्वैरचारी विशिष्यते ॥ इति ॥

अमृतस्य मोक्षस्य सुधायाश्च प्राप्तिहेतुः । अयं मन्दरपर्वतः । अस्मादृशां अधीतश्रुत्यन्तानां ब्राह्मणानामिव । भवादृशां देवानामपि ॥

**चेतो यद्भवतश्चिरंतनवचःसंदर्भगर्भस्थिते**
**वस्तुन्यस्तमितप्रपञ्चमलिनिम्न्यामज्जमामज्जति ।**
**तद्दुर्मोचतमोविमोहितमतिष्वस्मास्वकस्मादिदं**
**सक्तं यत्पशुषु द्विपात्स्वपि ततो धन्या वयं न्यायतः ॥ ४ ॥**

किं बहुना । अद्य भवत्संभावनासंपादितस्यानन्दस्य परं पारमपश्यन्तो वयमस्मदानन्दादनेकशतगुणं भवदानन्दमुपपादयन्तीं भगवतीं श्रुतिमपि न विस्रम्भामहे । आजानतो हि राजानः कदाचिदाक्रामन्ति परानाक्रम्यन्ते च तैरिति चक्रनेमिक्रमः सर्वजनीन एव । तदपि भवदीया जयन्त्येव न जीयन्त इत्यैकान्त्यमनुसंदधतो वयमियदपत्रपामहे व्यथामहे च । भवतः पुनरीषत्करोऽस्मदनुग्रहः संकल्पमात्रसाधनस्य । यथा हि भवज्जातीया एव भूमिचरान्दिवमारोपयितुं, दिविचरान्भुवमवरोपयितुं, आस्वादयितुं सुरापगां, आचमितुं सप्त सागरान्, विफलयितुं महास्त्राणि, विष्टम्भयितुं विश्वंभरमपि प्रगल्भन्ते, तथा श्रुतिशतप्रतिपन्नयाथात्म्ये भवतो माहात्म्ये दण्डापूपि-

---

आनन्दतारतम्यमधिकृत्य तैत्तिरीयोपनिषदि आनन्दवल्ल्यामेवं श्रूयते— ते ये शतं देवानामानन्दाः स एक इन्द्रस्यानन्दः, श्रोत्रियस्य चाकामहतस्य । ते ये शतमिन्द्रस्यानन्दाः स एको बृहस्पतेरानन्दः ॥

भवज्जातीया एव विप्रा एव भूमिचरान् दिवमारोपयितुं—यथा त्रिशङ्कुं विश्वामित्रः, दिविचरान्भुवमवरोपयितुं—यथा नहुषमगस्त्यः, आस्वादयितुं सुरापगा—यथा जह्नुः, आचमितुं सप्त सागरान्—यथागस्त्यः, विफलयितुं महास्त्राणि—यथा वसिष्ठः । विष्टम्भयितुं विश्वंभरं विष्णुं—यथा सनत्कुमारः, प्रगल्भन्ते ॥

कान्यायघण्टाघोष एव नः शरणम् । तदलं पल्लवितैर्वचोभिः अनुगृहाण स्वयमस्मान्. अस्ति यदि भक्तव्यसनानवलोकनसंकल्पः अथ साजात्याभिमानेन दुर्वाससः एव वचनं सत्यापयितुमध्यवसायस्तद्देहि, यत्र निनीषसि तत्र नेष्यामहे. येनानुकम्पयिष्यसि तेनानुकम्पयामहे, सर्वथा न्यस्तात्मानो वयं भवच्चरणे । किं करचरणे कदाचिदस्ति जिज्ञासा कीदृशस्तदभिप्राय इति न यदि किंकरजनेऽपि मादृशि तथेति मन्तव्यं' इति कृतव्यवसायस्य सुत्राम्णो वचसि चित्रीयमाणश्चित्रशिखण्डिजः समम् आखण्डलादिभिः सत्यलोकमभिप्रतस्थे। अमराश्च तमनुवर्तमानाः, वर्तमानाः पथि वैमानिकानां, दैत्यदानवयातुधानाध्यासितानि सिद्धचारणविद्याधराद्यावसथानि विलङ्घ्य, ततोऽतिदूरादुत्पन्नकिन्नरीगानचातुर्यम्, उपशान्तगान्धर्वतौर्यसौख्यम्, असंभावितकर्मदेवसंमर्दं, अनाशङ्कनीयब्रह्मर्षिसंचारसंकथं, अतिनीचरक्षःपिशाचमदिरागण्डूषदूषितमन्दाकिनीतीरतरुषण्डगूढचरदेवर्षिमण्डलम्, आखण्डलनगरोपशल्यमन्तःकरणशल्यमालोकयन्तः, पुरा हंसावतंसितैः सर्वगामिभिरप्सरोजनतौर्यत्रिकालंकृतैर्विमानैरतिवाह्यमानतयाऽगृह्यमाणतत्तत्प्रदेशसौन्दर्यमगृह्यमाणद्राघिमाणमध्वानमधुना पद्भ्यामेवाक्रम्यमाणतया गृहीतविपरीतमतिक्रामन्तः, पदे पदे श्राम्यन्तः पथि, पथिकजनसाधारणमपि तत्तत्प्रदेष्वातिथ्यं गूढसंचारवशादलभमानाः, दानवसेनागतागतोचितान् कथंचिदतिलङ्घ्य कानपि कक्ष्याभेदान्दिवः,

---

'जीव आङ्गीरसो वाचस्पतिश्चित्रशिखण्डिजः' इत्यमरः ॥

तपोभिरपि दुरापं तपोलोकसमीपमापेदिरे । प्रविष्टमात्राश्च ते परिहृतरजस्तमोगन्धानुबन्धतया परिणतसत्त्वैकसारेषु तत्रत्यवस्तुषु महीचरा इव महेन्द्रभोगेष्वदृष्टचरं विशेषमालक्षयन्तो विसिष्मियिरे । अपिच पुनरात्मविज्ञाननिरस्तावरणतया निःसीमविकसदकृत्रिमज्योतिषामधिकारमलक्ष्यपणाय केवलमनुत्तरं योगैश्वर्यमनुभवतामत्रभवतां सनकसनन्दनसनत्कुमारादिमहायोगिनां, मूकेष्विव वाग्मिनां, मूर्खेष्विव बुद्धिमतां, अन्धेष्विव चक्षुष्मतां, अधनेष्विव महेश्वराणां, कीटेष्विव सरीसृपाणां, सरीसृपेष्विव चतुष्पदां, चतुष्पात्स्विव मानवानां, मानवेष्विव महीभृतां, महीभृत्स्विव मरुतां, मरुत्स्विव मरुत्वतो, मरुत्वत्यपि पतन्तीमवज्ञामुकुळितां दृशमवलोकयन्तः, शृण्वन्तश्च तेषामेव 'हन्त वराकः शतमन्युर्नामायमेव परितोष्य यः शतेनाश्वमेधैरपि भगवन्तमिन्दुशेखरं प्रार्थयामास दानवामिषं स्वाराज्यम् । पश्यत पश्यत कुबेरमिमं पशुपाशविमोचिना पाशुपतव्रतेन समाराध्य परमात्मानं सखासि ममेत्यनुगृहीतोऽपि यः पिशाच इव धनपाळतां वव्रे । किं बहुना—आत्मभूतोऽप्ययमष्टमूर्तेर्भगवतो वैश्वानरो विफलीकृत्य विवेकं, उपास्य चिरतरं कालमुमारमणमपि, आसाद्य हव्यवाहतामन्नहरोऽस्मि देवानामित्यभिमन्यते कृतकृत्यमात्मानम् । हन्त चिरादिमान् देवपशूनद्राक्ष्म ॥

**किं न निगृह्णन्ति मनः किं न भजन्ते जनाः शिवं शरणम् ।**
**अभिसंधिभेदमात्रान्मोक्षो(क्षा?)पायेन बध्यन्ते ॥ ५ ॥'**

इत्यादीनि परिहासवचांसि, पश्यन्तस्तरतमभावमैश्वर्येषु, परित्यजन्तः स्वर्गाधिराज्यदुर्मदं, अपत्रपानष्टदृष्टयः स्वयमाधिपत्यादस्मदीयादत्र भिक्षाटनं ज्याय इति मेनिरे ॥

अथ सुरगुरुमागतं सशिष्यं
स्वयमवधार्य धिया सनत्कुमारः ।
अपगततमसो महाप्रभावा-
नशिषदमुष्य सभाजनाय शिष्यान् ॥ ६ ॥

प्रस्थिताश्च ते परस्परालापेषु, अथर्वशिखाप्रवर्तकतामाङ्गिरसाख्ययोगरहस्यप्रवर्तकतामृग्यजुषाद्युत्कृष्टप्रभावतामप्यनुस्मृत्य, प्रशंसन्तो ब्रह्मपुत्रं भगवन्तं तमङ्गिरसं, प्रशंसन्तश्च गूढचर्यागतं महर्षिं संवर्तशिवाचार्यं मरुत्तानुग्रहवाराणसीनिषेवणव्रताद्युपाख्यानेन, शंसन्तश्च संवर्तानुजमाङ्गिरसं सर्वतन्त्रेषु प्रवचनपारदर्शनप्रबन्धनिर्माणप्रतिभाव्यवहारकौशलैः, परिहरन्तश्च लौकायतिकतन्त्रतीर्थकरताप्रयुक्तमपकर्षमपि बाह्यतन्त्रप्रवर्तकपरमेश्वरनिदर्शनोपदर्शनेन, समागम्य यथाविधि मंनताश्च स्वगुराविव सह शिष्यैः सुराचार्य सनत्कुमारसमीपमाजग्मिरे ॥

सनत्कुमारेण समागमे गुरो-
र्निशाम्य वृत्ता विविधास्तदर्हणाः ।
निशम्य वादेष्वथ चास्य चातुरीं
विशिष्य तस्मिन्नमरा विनेमिरे ॥ ७ ॥

---

७ निशाम्य दृष्ट्वा, निशम्य श्रुत्वा ॥

आङ्गिरसोऽपि प्रणम्य भक्त्या महत्या परमेष्ठिनमिव सनत्कुमारं, आवेद्य देवकार्यं, अनुज्ञाप्य च तेन पाकशासनं, अनुव्रज्य परिष्वज्य गाढं, आदिश्य चतुर्मुखोपसर्पणेतिकर्तव्यतां, अनुगृह्य शिवेन चेतसा, विसृष्टस्तेन, विनयातिशयादादृष्टिपथादादधानः शिरस्यञ्जलिं, आस्थाय महान्तं योगं, आवर्तयन् प्रणवमेव, महामरैरासमाद महनावधानेन हैरण्यगर्भमायतनम् । गच्छन्तः पथि—

वाग्देवीवदनारविन्दगलितब्रह्मोद्यविद्याशत-
ग्रन्थग्रन्थिविभेदजातकुतुकब्रह्मर्षिहर्षस्तवैः ।
कर्णाभ्यर्णगतैर्निवृत्तनिखिलक्लेशा दिगीशास्तदा
निर्वव्रुर्न च वज्रत्रणमपि स्वर्गं पुनर्गाहितुम् ॥ ८ ॥

अपि चाद्राक्षुरविदूर एव ते निरस्तरजस्तमोव्यतिकरतया निर्मलसत्त्वप्रकाशराशिमिव, निष्कलङ्कशशाङ्कखण्डकासंघसंघटितमिव, निरन्तरज्वलदविन्धनज्वालापरिवर्तपिण्डितदुग्धसागरोर्मिनिर्मितमिव, चिरनिपातघनीभूतशारदाशिरश्चन्द्रचन्द्रिकाविकीर्णनीहारसारसाधितमिव, त्रैविक्रमचरणाक्रमाविद्धविष्यण्डकपालनिरर्गळनिर्गळदळकनन्दानिपातधौतमिव, विमलभास्वरप्रभावभासितनभोविभागं, अपास्तकलङ्कानुषङ्गतयेव धूमादिमार्गचंक्रमपङ्किलचरणपशुजनानाक्रमणीयं, अशेषभुवनसर्गावशेषसारैरिव विलक्षणैः शब्दादिभिर्विषयैरुपस्कृतं, अनुश्रवमयैः प्राकारैराभ्युदयिकोपासनामयैर्गोपुरैरात्मोपासनामयीभिः कक्ष्याभिः प्रणवम-

येन चास्थानमण्डपेन परिशोभितं, निजनिजकार्यनिवेदनावसरप्रतीक्षितत्तल्लोकाधिकारिकारितसंमर्दबहिर्द्वारवितर्दिकाभागं, आगन्तुकगन्धर्वकिन्नराप्सरस्समारब्धतौर्यत्रिकमौखर्यपूरितप्रथमकक्ष्यं, अनभिसंधिमत्कर्मयोगनिर्मलकर्मन्दिबृन्दपरिकर्मितद्वितीयकक्ष्यम्, अतिगहनन्यायसाङ्ख्ययोगादिदर्शनतत्त्वावमर्शव्यसनकर्शितकणादकपिलपतञ्जलिप्रमुखविद्वदुद्दामजल्पकथाघोषभूषिततृतीयकक्ष्यं, अतिविचित्रतरत्रयीशिखरोपपादितोपासनाभेदवासनासनाथमुनियूथदर्शिताश्चर्यतुर्यकक्ष्यम्, अतिरहस्यवैश्वानरदहरादिविद्यापरिचयानवद्यमहर्षिदर्शितोपासनाप्रपञ्चपञ्चमकक्ष्यं, अतिदूरविसृष्टदृष्टानुश्रविकविषयामिषरिरंसागन्धपरमहंसावतंसितषष्ठकक्ष्यम्, अतिचातुर्यपर्यवस्थापितानुश्रवतात्पर्यपर्यालोचनापनीतविपरीतान्वयशङ्काकळङ्कनिरङ्कुशकुशलजनालंकृतसप्तमकक्ष्यं, प्रसंख्यानपरासंख्यभृग्वङ्गिरोवसिष्ठादिगरिष्ठाधिकारिकमुनिमण्डलमण्डितास्थानमण्टपं, अपदं विपदां, अगोचरं वाचां, अनाशङ्कनीयमर्वाचां, अगम्यमाचारमात्रशरणैः, असाध्यमध्वरैः, अलभ्यमधिकैरपि तपोविपाकैः, दुरारोहं महादानैः, दुरवगाहमाहवसाहसैः, असंभावनीयं मनसापि स्वायंभुवं भवनम् ॥

स्वाध्यायाध्ययनादृतेन विधिना दृष्टयापि नालोकिताः
  सभ्यैः प्रत्युत सर्वभोगविमुखैरुत्सारिता दूरतः ।
नृत्यन्त्यः सुरसुभ्रुवः परमधुस्तत्र व्यथां मानसी-
  मानन्दैकपदेऽपि धामनि कलाकौशल्यवैफल्यतः ॥ ९ ॥

अपि च—

प्राकारगोपुरविहारवितर्दिकानां
मूलेषु यत्र हरिनीलशिलाविभङ्गाः ।
सक्ताश्चिरादिव जयन्ति युगान्तधूम-
संतानसंघटितसान्द्रमषीविलेपाः ॥ १० ॥

प्रविशन्तश्च तमालयं, 'ननु प्रातरागतस्य पुरुहूतनाम्नो दिवस्पतेः कतितमः पुरन्दरो नामायं' इति पृच्छ्यमाना दौवारिकैर्निर्जरा बलवदन्तर्लेलज्जिरे । अपि च गच्छतामन्तरेषामालक्ष्य गतिमतिमलीमसां, अधिगन्तव्याधिगमेन निर्वृताः सर्वतोऽपि महर्षयः कतिचित् 'अतिचिरं कालमहो खलु वयमप्यमीषां सामीप्यसारूप्यसायुज्यसालोक्यसिद्धिमाशासाना नानाविधानि तपांसि वृथा चक्रम' इति विगर्हमाणाः स्वमात्मानं लज्जितानमरान् भूयोऽपि लज्जयांचक्रिरे । अथ भगवानाङ्गिरसो देवर्षिभिः परिष्वज्यमानः पदे पदे नारदादिभिः, प्रत्युद्गम्यमानो विद्वद्भिः पतञ्जलिप्रमुखैः, अभिवाद्यमानः सिद्धविद्याधरैः, आनीयमानः सबहुमानमाप्तभृत्यैः परमेष्ठिनः, परिवृतो देवैः परमाश्चर्यनिर्भरैः, प्रकृतिगुणैरिव परस्परयोगवियोगपरिणमद्भिर्दैरुच्चावचैर्मणिभिरुपरञ्जितं, उपर्यास्तीर्णहंसतूलिकातल्पकल्पितमहार्होपबर्हं, अहिंसानृशंस्यकोमळिमावर्जितशमदमाभोगमन्तःकरणमिव महायोगिनां, ताळवृन्तचामरताम्बूलकरण्डकळाचिकाद्युपचारचतुरवरवर्णिनीजनन्यस्तवामहस्तवेष्टिततया व्याकोचाष्टदळात्मिकां व्यञ्जयदिव कमलासनतां त्रिभङ्गीसमुन्नततया त्रिवर्गातीतमिव सर्वतोभद्रं भद्रा-

सनमधितिष्ठन्तं, समसमयसमुद्यदादित्यसहस्रभास्वरैरर्केन्दुविद्युदनलरूपचतुस्तेजःसमुत्तम्भनायेव चतुर्दिक्षु निर्जिहानैस्तेजोभिरवलुम्पन्तमिव दिव्यमपि चक्षुर्दिवौकसां, संततव्यवहारसंसक्तचतुरागमाक्षरप्रेक्षणीयदन्तचन्द्रिकाविकासपरिहृतसंसारशार्वरैरायतापाङ्गरिङ्गद्भङ्गुरकरुणातरङ्गमालाभिराचार्यकाभिषेकमादधानैरिव योगिनामध्यात्मविद्यासु, चतुर्भिरिवान्तःपुरैर्दयितानां चतसृणामपि श्रुतीनां, आननपङ्कजैरनुगृह्णन्तमाश्रितोऽपि महाशयान्, त्रैयम्बकमकुटावलोकनावलम्बितहंसदशाश्रितेन मृणालवलयेनेव मृदुना शुचिना च सूत्रमयेनोपवीतेन सूचयन्तमिव सूत्रात्मकतामात्मनः, शस्त्रास्त्रविद्याकूपारपारीणक्षत्रियवर्गसर्गनिर्वृततयेव शस्त्रग्रहपराङ्मुखेन प्रकृत्यादिपृथिव्यन्तपञ्चविंशतितत्त्वपरिवर्तनमात्रमेव व्यापार इति प्रदर्शयतेव पाणिना दक्षिणेन परिवर्तयन्तमक्षमालिकां, अहर्मुखेषु प्रथममपानेव स्रष्टव्यतामवधार्य धार्यमाणेनेव स्फटिकमयेन कमण्डलुना परिष्कृतेतरकरपल्लवं, अस्मत्कृतधीताध्यापितनिखिलनिगमान्तसिद्धान्तपान्थसनकसनन्दनादिमहायोगिकोद्भावितदुर्भेदसंशयच्छेदसंवादजिज्ञासया मुहुर्मुहुरवलोकयन्तमन्तिकगतां वाग्देवतां, आचार्यमाचार्याणां, अधिगन्तव्यमधिगन्तव्यानां, परमानन्दतुन्दिलमपि प्रपन्नानुग्रहैकव्यसनिनं, समष्टिं भूतग्रामस्य, साधारणं पितरमखिललोकस्य, विश्रान्तिभूमिं विद्याफलानां, विरामपदं वाग्विभूतीनां, दूरं दुराशयानां, अदूरमात्मवेदिनां, अधिगम्य भगवन्तं पितामहं, अत्यद्भुतसभासभानाथसंदर्शनजडीकृतो वाचस्पतिरपि भगवान् वाग्देवता-

वलोकनसंपन्नभयकम्पसंभ्रमस्तम्भितवाङ्मुखः क्षणमवाङ्मुखश्च तदीयदिव्यतेजःप्रतिहतदृष्टितया यावदास्त स्तब्ध इव, तावदनुग्रहमय्या दृशा जगन्निधेः, आगच्छ वत्सेत्यमृतासारकिरा गिरा च गिरां देव्या निर्व्याजमाप्यायितः, समाधाय कथंचिदान्तरं करणं, अनुस्मरन् प्रणवं, आवर्तयन् ब्रह्मसूक्तानि तत्तदागमोदितानि, प्रागेव नम्रोऽपि भक्तिभारेण प्रणम्य शतशः सहामरैः प्रसादादेव देवदेवस्य प्रारभत किंचिदेवमभिधातुम्

अगन्तव्यं तर्कैरनधिगमनीयं क्रतुशतै-
रनासाद्यं दानैरनुपसरणीयं च तपसा ।
भवन्तं पश्यन्तः शुचमभिभवन्तं प्रणमतां
कृतार्था जाताः स्मः पुनरपि कृतार्थाः पुनरपि ॥ ११ ॥

किंच—

भूतग्राममिमं चतुर्विधमहो निर्मासि यल्लीलया
यच्च व्याकुरुषे निरन्तरमिमाः साङ्गाश्चतस्रः श्रुतीः ।
चातुर्यं कथमीदृगित्यपगता शङ्का समस्तापि न-
श्चातुर्यं भवतो भुजेष्वपि मुखेष्वद्य स्वयं पश्यताम् ॥ १२ ॥'

इति । स च ततः 'साधु वत्स साधु स्थाने किल छन्दोगाः बृहती वाक् तस्याः पतिर्बृहस्पतिरिति नाम ते निराहुः' इति

---

१२. जरायुजाण्डजस्वेदजोद्भिज्जलक्षणश्चतुर्विधो भूतग्रामः । चातुर्यं चतुरत्वं चतुष्ट्वं च ॥ बृहस्पतिशब्दः छन्दोगश्रुतावेवं व्युत्पादितः — वागेव बृहती तस्या एष पतिर्बृहस्पतिः ॥

प्रशस्य 'परिम्लान इव लक्ष्यते कुतः पाकशासन' इति पृच्छति सानुकम्पमम्भोजसंभवे, बृहस्पतिः पुनरिदमभाषत—

'परिम्लाना दीनाश्चिरपरिहृतस्वस्वभवना-
श्चरन्तः पादाभ्यामवनिवलये भिक्षव इव ।
यदाख्यातुं दुःखं तव सविधमेते परिगता-
स्तदद्य व्यस्मार्षुः पदमिदमुपेता वितिमिरम् ॥ १३ ॥

किंच—

यत्प्रत्यस्तमितप्रपञ्चमखिलव्यापारपारंगतं
प्रत्यग्ज्योतिरनुत्तरं शमधनैरालोच्यमेतादृशैः ।
तत्संप्रश्नकथासुधाभरितयोः सेक्तुं भवत्कर्णयो-
र्मिथ्याज्ञानविचेष्टितानि बलवज्जिह्रेति जिह्वैव नः ॥ १४ ॥

अथाप्यनुयोगाज्ञानिर्वर्तनाय किंचिदावेद्यते । योऽसावग्रतो भवतः परिणाम इव करुणायाः, परिपाक इव शमदमोपरमाणां, अधितिष्ठति शमवतामग्रासनं दुर्वासाः, अयमेव सर्वासां निदानमस्मदापदाम् ॥

अव्याजकोपनिधिना मुनिनामुनैव
निर्वासिता सुरपतेः सुरलोकलक्ष्मीः ।
आसाद्य दानवकुलानि दिवौकसो न-
श्चक्रे पदं कृपणमानवदुर्दशानाम् ॥ १५ ॥

अथ यद्भवतैव कल्पितमध्वरहविर्जीवनममर्त्यानामपहृते तस्मिन्नसुरैः, असंभाविते च यादाकादाचित्के दाने द्विजन्मनां,

अशिक्षिते च भौमवदन्नसाधनव्यसने, भवत्प्रसादादवधूय सौवर्गराज्यसिसाधयिषां, अपहाय दिव्यभोगेषु कौतूहलं, अन्नायैव स्पृहयमाणा निरन्तरं, अनिमिषतया श्रमावर्जितमूर्च्छाः स्वापमप्यलभमानाः सुलभमाना दिवौकसः सूक्ष्मतरं व्युदपद्यन्त दुर्भगानामन्नार्थिनामर्थनाभङ्गमन्दाक्षसंधुक्षितान्तरज्वालाकलापसंभृतेषु संभ्रमेषु मानवानाम् । किं बहुना—

यदियज्जीवितमेतैस्तदायुषा कल्पितेन भवतैव ।
या त्वियती मांसलता साप्यन्नापायशोभेन ॥ १६ ॥

आस्तामिदम् ।

प्रेक्षावन्तो दिशि दिशि नराः प्रेक्षमाणा धरण्या-
मित्थंभूतान् सुरपरिबृढानिन्द्रवैश्वानरादीन् ।
तत्तत्साम्योदयफलपरामप्रमाणीं पुराणीं
मत्वा वाचं विदधति शनैः कर्ममार्गेष्ववज्ञाम् ॥ १७ ॥

अथवा नैतावदभिधातव्यमस्माभिः ॥

अभिदधति ते मूर्धानं द्यामनुश्रवसूक्तयः
सुचिरमसुराश्चैतामित्थं तुदन्ति दुराशयाः ।
निगमशिखराभ्यासव्यासङ्गतो यदि विस्मृतं
तदपि भवता तन्नो दौष्कर्म्यमित्युपरम्यते ॥ १८ ॥

---

१८. अग्निर्मूर्धा चक्षुर्षी चन्द्रसूर्यौ इति श्रुतौ अग्निपदं तदुपलक्षितस्वर्गलोकपरमिति व्याख्यात तद्भाष्ये ॥

इमे वयमिदं तत्त्वमित्थं स्थानमियं दशा ।
परं यदत्र कर्तव्यं प्रमाणं तत्र नो भवान् ॥ १९ ॥'

इत्यावेद्य विरमत्याङ्गिरसे, विनमत्सु च युगपदमर्त्येषु, प्रसादयन् सर्वानिदमाह पद्मसंभवः । 'विदितवेदितव्यैर्भवद्भिरित्थं न विप्रतिपत्तव्यं दुर्वाससि । यतः परिणाम एष करुणायास्तत एव महेन्द्रमनुजग्राह तनीयसा शापेन । पन्था कथमतिवाहनीय-मिन्द्रेण परःसहस्रैरपि वासरैर्निखिलजगन्मातुरम्बिकाया निर्माल्य-समुल्लङ्घनप्रसूतमिदं दुरितम् । तदस्मिन्महत्यपराधे यावदक्षपि-तमेतदेनस्तावदनुस्मरणमपि भवतामपराधो महानिति चकितै-रस्माभिरेतावदुदासितम् । महदपीदं दुरितं मन्दरपरिमरावामेन परिहृतमेव सवासनं भवताम् । तदपि जगज्जननीचरणापराध-संसर्गादधुनापि शङ्कमानैरस्माभिरन्य एवोपायः समुल्लिखितो भवदनुग्रहे । नारायणीप्रमादतिरस्कारजोऽयमपराधो नारायणी-यप्रसादपुरस्कारेण समाधेय इति । तथाहि—

यदेतद्वामाङ्गं घनजघनकेशस्तनभरं
कदाचित्तच्छंभोर्भवति कमलाकौस्तुभधरम् ।
जगन्मातर्येवं यदपचरितं तन्मघवता
जगन्माता देवः प्रभवति स एव क्षपयितुम् ॥ २० ॥

---

नारायणी गौरी । नारायणीयप्रसादः विष्णुप्रसादः ॥

२०. शंभोः वामाङ्गं गौरी । सैव श्रीविष्णुः । यदाहुः—

एकापि शक्तिः परमेश्वरस्य भिन्ना चतुर्धा विनियोगकाले ।
भोगे भवानी समरेषु दुर्गा कोपे तु काली त्यवने तु विष्णुः ॥

तदागच्छत क्षीरसागरं, दर्शयिष्यामो भगवन्तम्' इति सद्मासनादुत्थायान्तर्दधे भगवानब्जसंभवः ।

अथ कथमप्यमर्त्यपतयः परिहृत्य भयं
गुरुकरुणाविशेषपरिणामकृताभ्युदयाः ।
अखिलजनुष्मदाशयगुहाशयमप्युदधौ
शयितमिमे समेतुमुदयुञ्जत शार्ङ्गधरम् ॥ २१ ॥

किंच—

पथि ध्वजं यं गरुडध्वजस्य
प्रस्थाय यान्तो ददृशुर्दिगीशाः ।
तमेव मद्यस्तदनुग्रहस्य
भविष्यतोऽपि ध्वजमग्रहीषुः ॥ २२ ॥

अवतरन्तश्च ते सत्यलोकादनेकसहस्रयोजनमपि पन्थानमतिलङ्घितं गणयन्तो गव्यूतिमात्रमिव, गुणयन्तो भाषितानि चतुर्मुखस्य, गुरुणाकृष्यमाणतयेव झटित्युपनिपत्य विशश्रमुरविश्रान्तपरिभ्रमदभ्रमारुतसंपातविनीतपथिकव्यथे जलदपथे। अद्राक्षुरपि तत्र ते निद्राणपुराणपुरुषनिद्राभङ्गापराधमाशङ्क्य संताडयन्तामिव विद्रुमकाण्डवेत्रदण्डैरनिवार्यमौखर्यसमुल्लासदुर्ललितानि कल्लोलमण्डलानि, निरिन्धनज्वलदबिन्धनज्वालासंबन्धान्निष्यन्दमानमिव वीचीभिराभितोऽपि, सद्यःसमास्वादितशुद्धदुग्धपूरपूरितगर्भनिर्भरविशदनीरदनिकरसंछन्नतया संपन्नमिव मण्डेन, चिरसंभृततया संभावितपयोविकारपरिजिहीर्षुणा ततस्ततः

क्षिप्ताभिरम्बुजसंभवेन समूलाभिरिवौषधीभिः शैवालमञ्जरीभि
रभिशोभितं, चिरपरिचितक्षीरमेघरसास्वादसुखितचातकपोतस्या
वज्ञनिष्ठ्यूतचञ्चूपुटनिपतदितरमेघशीकरं, गोविन्दचरणारविन्द
संदर्शनायातविबुधसद्मानहंसविविच्यमानसर्वतःस्तनशापना
सहस्रनीरकृताहारलब्धस्वामिन्धनबलवदापिन्धनानलं, सायंप्राति
कोल्लासपल्लवितकल्लोलजालवेल्लितवेलागिरिशिखरसंचारलब्धदुग्धा-
भिषेकमुहूर्तविमलीकृतवन्याद्रिन्तया परिचिन्वन्तमिव चिरादै
रावतसर्गचातुरीं, क्षीरैकनिधानतया पर्वकालावगाहनप्रसक्तपर
मर्षिजनप्रस्तुताघमर्षणसूक्तगोचरक्षीरपदोहानूहविचारकोलाहला-
भिभूतवीचीघोषं, तृतीयावतारश्वेततनानुचिकीर्षया स्वयमपि श्वेती
भवद्भिरिव भगवतः प्राथमिकावतारजातीयैः क्षीराहारपरिणाम
निर्मलैर्मत्स्यकूर्मैः परिकर्मितं, शार्ङ्गधरं द्रष्टुं समागच्छेदपि जा
चन्द्रशेखर इति संभावनया सज्जीकृतैः कैलासैरिव समस्तरङ्ग
परिपूरितैरन्तर्गतैर्गिरिभिरभिशोभितं, कालचक्रमिव कर्कटमकर
मीनकरम्बितं, गङ्गातीर्थमिव गर्भस्थानेकमठराजिविराजितं
पाणिनीयसूत्रमिव परस्मैपदप्रतिपादकं, आत्मतत्त्वमिवानिर्व
चनीयगुणप्रपञ्चं, कैलासशिखरमिव शैवलक्षणलक्षितद्विजपण्ड
मण्डितं, निदाघभास्करमिव नितान्तमुत्तरङ्गत्वातिभीषणं, समधि

---

पर्वकालेति ॥ अघमर्षणसूक्ते यदपा क्रूरमित्यत्र अपदस्थाने क्षीरपद
ऊहो न वेति विवदमानाः परमर्षयो दृष्टाः ॥

निदाघभास्करः नितान्तं उत्तरं उत्तरायणमार्गं गत्वा प्राप्य अतिभीषण
प्रचण्डतरः । समुद्रश्च उद्गततरङ्गत्वेनातिभयप्रदः ॥

मिव क्षीरसर्गस्य, समवायमिव नैर्मल्यस्य, चन्द्रतारकादिनिर्मलवस्तुवर्गनिर्माणकौतुकिना विधिना विलाप्य निषिक्तमिव भुवि रजताचलं, क्षौमावकुण्ठनमिव क्षमायाः, पद्मनाभशयनागारपर्यन्तकुट्टिममिव स्फाटिकशिलाचितं, अनास्पदं कविगिरां, आश्चर्यमाश्चर्याणां, आर्तिहरं चक्षुषोः, आनन्दमन्तःकरणस्य, दुरासदमनाराधितनारायणचरणारविन्दानां दुग्धोदं नाम रत्नाकरम् ॥

घोषे क्वापि पुरा पयः कियदपि स्तैन्येन दैन्येन वा
लब्धुं योऽवहदीश्वरोऽपि जगतां जन्माधमं मानुषम् ।
तं विस्मापयितुं तरङ्गवलयैर्घोषानसंख्यान्सृज-
न्नाभूभूतलसंभृतेन पयसैवावृत्य यो वर्तते ॥ २३ ॥

अपि च—

स्वाद्या यत्र सुधैव यस्य जठरे साक्षात्स धन्वन्तरिः
शेते यत्र समस्तरोगशमनो नाम्नैव देवोऽच्युतः ।
तस्मिन्दुग्धनिधावपि स्पृहयते नैव स्थिरामासिका-
मन्तर्लीनहलाहलोष्मचकितो नाथः स्वयं पाथसाम् ॥ २४ ॥

अपश्यन्नपि मध्यतस्तस्य किंचिदन्तर्निमग्नपुराणभूदारदंष्ट्रादण्डक्षोभितपयःपूरसमुद्धृतमिव नवनीतपिण्डं, अभितश्चलदुच्छृङ्खलतिमितिमिङ्गिलकुलवालविलोडनोद्धूतमारुतोद्धूतपुञ्जीकृतमिव फेनमण्डलं, एकतः प्रतिपर्वनिर्मुच्यमानपङ्कजनाभशयनोरग-

---

२३. भुवं भूतलं (पाताल) चाभिव्याप्य आभूभूतलम् ।

निर्मोकराशिमिव कालपरिपाकलब्धमृद्भावनिर्मलं, नविबिन्धामिव वसुन्धरादुकूलस्य, कल्पान्तरीयमन्दरवेष्टनक्लेशजनितया मूर्च्छया पतितस्य वासुकेर्जरतो वलयितमिव भोगमण्डलमप्रतिरूपमन्तरीपम् ॥

स्थानं विश्वसृजोऽपि तन्निरय इत्याचक्षते यद्विदो
यद्गत्वा गमनीयमुत्तरमितः कुत्रापि न श्रूयते ।
आयस्यापि हि साधयन्ति यतयो यत्रारुरुक्षां परं
तद्दृष्ट्वापि पदं हरेः सुरगणास्तस्तम्भिरे गाहितुम् ॥ २५ ॥

अपि च—

दध्युर्यावदुपायं ते गन्तुं तत्र दिवौकसः ।
तावन्निदध्युरायान्तं तत्र देवं पितामहम् ॥ २६ ॥

पश्यन्नथ तत्र पाकशासनमुखानमरान् प्रासादशिखरारोहणकुतूहलिनः पङ्गूनिव भग्नमनोरथान्, प्रसादविमलया दृष्ट्यानुगृह्य सहागच्छत मयेति संदिशन्नग्रतश्चचाल कमलासनः ॥

गच्छन्नेव ततः स तत्र गलितब्रह्माधिकारैश्चिरा-
दैकान्त्यं परमं गतैर्भगवति श्रीवल्लभे दुर्लभे ।
प्राचीनैः कमलासनैरुपगतो भक्त्या महत्या नमन्
सस्नेहं सदयं सखेदमपि च प्रत्येकमादिश्यत ॥ २७ ॥

'कथमद्यापि वत्स न परिणतोऽसि ।

वल्लभोऽसि सरस्वत्या वहसे च श्रुतीर्मुखे ।
जगत्पितामहश्चासि कस्तत्राप्यनुशासिता ॥ २८ ॥

तच्चिन्तय तावत्स्वयमेव—

आयुर्येषाममीषां परममभिमतं किंचिदूनो मुहूर्तः
क्वा संपद्वा विपद्वा प्रभवति भवितुं तत्र तेषां क्षणार्धे ।
तत्त्यक्त्वा क्षुद्रजन्तून्दिवि चरत इमांश्चिन्तयन्नात्मनीन
वत्स त्वं प्रार्थयेथा न किमपि परमं ब्रह्म लक्ष्मीसहायम् ॥'

इति बोधितो विधिरिदमाचचक्षे—'जानामि भगवन्तो जानामि ।

कतीन्द्राः कति लोकेशाः कति विश्वसृजोऽथ वा ।
श्वासे श्वासे प्रजायन्ते प्रलीयन्ते च शार्ङ्गिणः ॥ ३० ॥

तथापि क्वचिन्नियुक्तेन मया तदनुगुणं चेष्टितव्यमिति व्यवस्यन्नागतोऽस्मि । तदद्य भवद्भिरेव दर्शितं भगवन्तमभिगम्य, भवद्दत्तैरेवाक्षरैर्व्याहरेयं' इति प्रश्रितवादिनि पद्मसंभवे, प्रसन्नाः पारिषदा हस्तग्राहमाकर्षन्तस्तमन्तिक एव दर्शयामासुरान्तरं रहस्यमुपानिषदाम् ॥

'यं त्वं चिन्तयसे नान्यं सर्वारम्भेषु सर्वदा ।
सत्त्वं चिन्तय सेनान्यं विष्वक्सेनमिमं हरेः ॥ ३१ ॥

इमं च पश्य वैनीतकं भगवतो वैनतेयं, यस्य किल पुरा कल्पे सुधाकुम्भहरणसंरम्भसंभ्रमोद्धूतपक्षमारुतविक्षेपसमुन्मूलितया परितो विकीर्यमाणेषु नन्दनोद्यानपादपेषु, प्रयत्नेन महता पारिजातमेकमाहृतवतो भगवतोऽपि मन्दाक्षमिवालक्ष्यत इति संशृणुमहे । अपि च—

छन्दो यथा यथा शौरेः संग्रामेषु जिगीषतः ।
तथा तथा प्रवृत्तोऽयं छन्दोमय इतीर्यते ॥ ३२ ॥

पादाङ्गुष्ठनखाग्रलम्बितमहाकूर्मद्विपाङ्घ्रिद्वय-
न्यासाटोपविभग्नचञ्चुविधृतन्यग्रोधशाखां गताः ।
येनोर्ध्वं पतता पुराणमुनयो नीताः पुरा मेनिरे
संसिद्धं सशरीरमूर्ध्वगमनं सद्यस्तपोभिर्दृढैः ॥ ३३ ॥

अस्य किलोपवीतमित्यायामतः साम्यमवधारयन्तः पुरा निर्जरा मौर्वीपदे मेरुधन्वनो वासुकिमादिशन्निति वदन्त्यैतिहासिकाः ।

पश्य ज्ञानक्रियेच्छामणिमयमुकुराबद्धमध्यात्मविद्या-
भास्वद्रत्नप्रदीपप्रकरपरिहृतध्वान्तमन्तः समन्तात् ।
गाढाविद्याकवाटं प्रबलशमदमद्वारपालाभिगुप्तं
भक्तिद्वारं मुरारेरिदमिह शयनागारमोङ्काररूपम् ॥ ३४ ॥'

इति प्रबोधितो विधिरीदृशतादृशतानवच्छिन्नवैभवमचक्षुर्ग्राह्यमनुश्रवैकश्रवणीयमधिगन्तुमिव भगवतो रूपमासाद्य चक्षुःश्रवस्तनुमक्षिभिः सहस्राभ्यामनुभवन्तामिव परमाद्भुतं, आशयमागमानां, अतिवेलश्वासनिःश्वासपरम्परासंपादितभोगोप-

---

३२. छन्दः अभिलाषः। छन्दोमयः वेदमयः । 'सुपर्णोऽसि गरुत्मान् त्रिवृत्ते शिरो गायत्रं चक्षुः स्तोम आत्मा साम ते तनूर्वामदेव्यं बृहद्रथन्तरे पक्षौ यज्ञायज्ञियं पुच्छं छन्दांस्यङ्गानि धिष्णिया. शफा यजूंषि नाम' इति श्रुतेः ॥

च्चयापचयतया संततमुपपादयन्तमिव विलक्षणामूर्ध्वडोलाविहार-निर्वृतिं, आचार्यं योगविदां, आदिदेशिकं पदतन्त्रस्य, संप्रदाय-प्रवर्तकं शारीरकर्मणां, भोगविमुखेषु हृदयेषु शमधनानां निरन्त-रावासनिर्वेदादिव भोगिनमेव कमपि भुवनतलाकल्पमास्तीर्य तल्पमधिशयानं, अतिशयानम्रमौलिभिर्महायोगिभिः प्रणामावसर-प्रकीर्यमाणेषु कुसुमोपहारेषु सौकुमार्यातिशयसंसक्तैः कतिपयै-रिव कल्पतरुप्रसूनैश्चिरनिर्गतसिद्धसिन्धुशीकरशेषैरिव ततस्ततो लग्नैर्नखरैर्निरर्गळापवर्गदानसंसूचनाय नियन्त्रितेनेव ध्वजेन संसार-कान्तारसंचरणखिन्नशारीरकच्छायाप्रदानाय समावर्जितेनेव छत्रेण च परिष्कृताभ्यां पादकमलाभ्यामलंकुर्वाणमङ्कतलमादिजनन्यो-र्लक्ष्मीधरण्योः, कटितटाबद्धकनकांशुकप्रभातरङ्गपरिष्वङ्गपिशङ्गी-कृतवसुमतीकमलाविवेचनाचतुरतत्तत्परिचारिकोपचारविपर्यास-परिहासविनोदिनं, आविर्भविष्यदसंख्यहिरण्यगर्भाङ्कुरमयमणिश-लाचितकर्णिकेन प्रतिसर्गावर्तमानप्रकृत्यादिधरण्यन्ततत्त्वकिञ्जल्क-पुञ्जेन प्रपितामहेन भुवनानां पाण्डरेण सरोरुहेण मण्डितनाभि-मण्डलं, निर्मलचिन्मयवपुषि नित्यानुबिम्बितेन मृगमदतिलकेनेव वक्षःस्थितायाः श्रियः श्रीवत्सेन हृदयादुद्भूते चन्द्रमसि स्पर्धया स्वयमपि हृदयादाविर्भवता बालसूर्येणेव कौस्तुभेन भूषयन्तम-प्राकृतानि भूषणान्यपराणि, दिग्दन्तिशुण्डादण्डैरिव दिव्यतरु-प्रकाण्डैरिव दुर्मददानवनिर्मथनयशोविशदैरिव मौक्तिकदामवेष्टि-तैर्विजयेन्दिरासमाश्लिष्टैरिव विचित्रकनकाङ्गदकङ्कणाद्यलंकृतैश्चतु-र्भिर्भुजैः सूचयन्तमिव चतुर्व्यूहतां, अहर्मुखविकसदाम्रपल्लवोल्ला-

सिनि दन्तच्छदे विप्रकीर्णतया सान्ध्यरागसंमूर्च्छितचन्द्रिकोद्गारानुकारिणा मन्दस्मितेन कलिकलुषजीवाशयप्रसादनकतकरेणुभि कैवल्यलक्ष्मीस्वयंवरदामभिरिव कलितनानावर्णविन्यासपेशलै परिवहत्करुणासारसंपातशीतलैः कटाक्षैरप्यनुगृह्णन्तमनन्यशरणान्महामुनीन्, कार्णवेष्टनिकविलसन्मुखारविन्दकामनीयकावलोकनविस्मयमानकमलावितीर्णचुम्बनासक्तताम्बूलरागसंपद्विडम्बिना पद्मरागतिलकेन परिष्कृतफालवलयं, अतिनिर्मलफणामण्डलोदरप्रतिबिम्बितैरहिराजफणामणिगणैरिव किरीटरत्नैरभिरञ्जितमहार्होपबर्हं, अतिविनयभारभङ्गुरैरनन्यार्पितदृष्टिभिराकृतिमद्भिरायुधैः पञ्चभिरभितोऽपि यथोचितमासेव्यमानं, अनुपमेयं प्राकृतैर्भावैः अप्रमेयमनुत्तरपदारोहपङ्गुभिरर्वाचीनैः प्रमाणैः, अक्षोभ्यं विज्ञानसागरं, अक्षयं महानन्दशेवधिं, अतिदुर्लभमश्रुतानुश्रवैरमीमांसितोपनिषदाशयैरनध्यासितनिदिध्यामनपथैरक्षालितकर्माशयैरनुल्लङ्घिताविद्यकपर्वपञ्चकैः, अनायासलभ्यमतिदृढावलम्बितगुरुचरणैरपायोपायवृत्तिपराङ्मुखैरप्रकम्प्यविश्वाससंपदवष्टम्भशालिभिरात्मार्पणतत्त्ववेदिभिर्महाभागैः, असाधारणषाड्गुण्यं, अखिललोकशरण्यमालक्ष्य सर्वप्रमाणपरायणं भगवन्तं नारायणं असकृत्प्रणिपतन्, असकृदुत्थाय, बध्नन् शिरस्यञ्जलिं, असकृदावर्तयन् प्रणवं, असकृदनुस्मरन् परतत्त्वं, अश्रुपूर्णैर्लोचनैरविरलपुलकाङ्कितैरङ्गकैरानन्दगद्गदैश्च वचोभिरित्थमस्तावीत्—

'क्षन्तारं सकलागसां जडधियां यन्तारमन्तस्तमो-
हन्तारं जगतामनुत्तरपरार्हताङ्कितोरःस्थलम् ।

उद्यत्कौस्तुभशोभमुत्पलवनीसच्छायमच्छायत-
स्निग्धापाङ्गतरङ्गमैक्षिषि परं ब्रह्माच्युतं शाश्वतम् ॥ ३५ ॥

किं तर्कैरतिवक्रैः किं फलमुपबृंहणैर्विविधैः ।
अद्यैक्षिषि श्रुतीनामाशयमहिराजभोगशयम् ॥ ३६ ॥

अहो धन्योऽस्मि धन्योऽस्मि ।

एकं तद्द्विविभूति त्रिधामनिहितं चतुर्व्यूहम् ।
पञ्चायुधं प्रपद्ये षड्गुणसंपन्नमशरणः शरणम् ॥ ३७ ॥' इति ।

अत्रान्तरे वाचस्पतिं पुरस्कृत्य वासवमुखा बर्हिर्मुखाः प्रविकीर्य पुष्पाञ्जलीन्, प्रणिपत्य दूरतः शतकृत्वः, समुत्थाय शिरसि संघटिताञ्जलयो विस्मयस्तिमिताः स्तम्भवदासांचक्रिरे ॥

तुष्टूषतोऽस्य बहुधा सुरदेशिकस्य
दिव्याद्भुतानि चरितानि परस्य धाम्नः ।
स्तब्धा सती श्वशुरदर्शनसाध्वसेन
वाणी न वक्त्रकुहराद्बहिराविरासीत् ॥ ३८ ॥

ततः प्रमादविमलपद्मनाभकटाक्षपरिक्षेपविदितेङ्गितया पाद-मूलनिविष्टया तस्य भगवत्या पद्महस्तया निसर्गमधुरैरपि निर्भर-

---

३७. एकं अद्वितीयम् । लीलानित्याख्ये द्वे विभूती । जाग्रत्स्वप्नसुषुप्त्यवस्थालक्षणानि ( सूर्यमण्डलक्षीराब्धिपरमपदलक्षणानि वा ) त्रीणि धामानि । वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाश्चत्वारो व्यूहाः । शङ्खचक्रगदाशार्ङ्गनन्दकाः पञ्चायुधानि । ज्ञानशक्तिबलैश्वर्यवीर्यतेजांसि षड्गुणाः ॥

वात्सल्यसुधासारमधुरैरक्षरैः—'वत्स चिरादागतोऽसि, वर्तसे कुशलेन, का इमाः प्रजाः कान्दिशीका इव लक्ष्यन्ते' इत्यनुयुज्यमानो विधिरन्तरानन्दतुन्दिलः प्रणम्य शतशः परां देवतामिदमाबभाषे—

'जय जय जगदम्ब जाम्बूनदाम्भोजकोशप्रभे
जय जय कमलाक्षवक्षःस्थलीहर्म्यनर्मप्रिये ।
जय जय करुणाकटाक्षप्रतीक्षत्रिलोकेश्वरे
जय जय जनिमार्गलग्नाणुवर्गापवर्गप्रदे ॥ ३९ ॥

वत्सेति प्रवहत्सुधारसपरिष्वक्तं यदामन्त्रितं
दृष्टं यच्च दयातरङ्गशिशिरोत्सङ्गैरपाङ्गैस्त्वया ।
तस्मादस्म्यधुना विशिष्य कुशली धन्याश्च देवा इमे
विज्ञाप्यं तु कथं हरौ किमथवा तस्यादिरादिश्यताम् ॥'

इति यावत्प्रार्थयते कमलां कमलासनस्तावद्गोविन्द एव स्वयमित्थमनुजगृहे—

'स्रष्टासि तात जगतोऽस्य चराचरस्य
संधारयस्यथ मुखैश्चतुरोऽपि वेदान् ।
तेनासि लोकदयितो दयितो ममापि
तद्ब्रूहि कं सफलयामि मनोरथं ते ॥ ४१ ॥

---

३९. जनिमार्गेति ॥ अणुवर्गः जीववर्ग. ॥

४०. तस्य आदिः प्रकारः आदिश्यताम् । 'आदिः प्रकारे प्रथमे निदाने परपूरुषे' इति भास्करः ॥

कत्यसृजं विश्वसृजः कति वा स्रक्ष्यामि कति सृजाम्यधुना ।
भवति परभक्तिशालिनि भवतीव न मे क्वचित्करुणा ॥ ४२ ॥'

इति मधुरां गिरमिन्दिरापतेः पिबन्नष्टभिः कर्णैः पितामहस्तादात्विकहर्षसंभ्रमावलुप्तवक्तव्यः कथंचिदिदमाचचक्षे—

'स्वप्नोन्मादावपि हि सृजतो नाथ वस्तूनि मिथ्या
संधार्यन्ते ननु च मनुजैरप्यमी वेदवादाः ।
प्राप्तं श्रेयः किमहमियता प्राप्तमेवानया तु
स्वामिन्दृष्ट्या तव शिशिरया मङ्गलं मङ्गलानाम् ॥ ४३ ॥

मनोरथानामपि यो मनोरथः सुदुर्लभानामपि यत्सुदुर्लभम् ।
तदेव लब्धं तव पादपङ्कजं कदर्थनान्येव कदर्थनान्यतः ॥

अपि च—

के देवाः के दनुजाः किं जगदेवेदमन्ततः कोऽहम् ।
परिहृत्य विमोहमिमं पालय दासोऽस्मि दासोऽस्मि ॥ ४५ ॥'

---

४३. अतितुच्छौ स्वप्नश्च उन्मादश्च मिथ्यावस्तूनि कर्म सृजतः । 'अथ रथान्रथयोगान्पथः सृजते' इति श्रुतेरनुभवाच्च । एवं सति मिथ्याभूतस्यास्य प्रपञ्चस्य स्रष्टृत्वेन न मे कोऽप्युत्कर्षः । नापि वेदधारणेन, मनुजाविशेषात् ॥

४४. अतः भवत्पादमेवात (व्यतिरिक्तानि) कदर्थनानि कुत्सितप्रार्थनानि कदर्थनान्येव कुत्सितप्रार्थनान्येव । तस्मान्न किमप्यपरं प्रार्थयितुमुत्सह इति भाव. ॥

इति कटाक्षपातेन कमलायाः परिग्रहेण च भगवतः प्रतिबुध्य तत्त्वमुदासीने पद्मसंभवे, प्रपञ्चपाञ्चालिकानटनसूत्रधारः परमपुरुषः सर्वपथीनया महामायया तमाच्छादयन्, कर्तव्यमस्योपदिदेश—'सत्यमेव भवानाह कदर्थनान्येव कदर्थनानीति। अलमेव ह्यग्रतः स्थितिरस्माकम्, अवहितो गृहाणेदं, आदिश च सर्वानमरान्—

संधानं कुरुतासुरैः प्रथमतो मन्थानमुर्वीधरं
कृत्वा मन्दरमर्णवे क्षिपत ते यूयं समेतास्ततः।
बद्ध्वा वासुकिनाथ मन्थत ततः संत्पस्यते या सुधा
तामास्वाद्य गमिष्यथाप्यमरतां यूयं न वः शत्रवः॥ ४६॥

परं तु भवितात्र दुष्परिहरः प्रत्यूहः, परिहरिष्यते च प्रसादादेव देवदेवस्य। तदद्यप्रभृति विशिष्यावलम्बध्वमम्बिकारमणं शरणमिति॥

जानाम्यहमुमाकान्तं जानासि त्वं च मद्गिरा।
जानन्ति किमिमे मूढास्तत्सम्यगनुशिष्यताम्॥ ४७॥'

इति परमुपदेशं देशिको देवतानां
निरवधिकरुणाब्धिर्निर्जरेभ्यो वितीर्य।
स्वयमपि हृदि गाढं चिन्तयन्निन्दुचूडं
मिषति कमलपीठे पद्मनाभस्तिरोऽभूत्॥ ४८॥

अथ यथोपदेशमिन्दिरापतेरादिश्यादेष्टव्यमन्तर्हिते पितामहे, पूर्णमनोरथा दिवौकसः पुरहराराधनकौतूहलेन पुनरासेदुरुपत्यकां परमानन्दमन्थरा मन्दराद्रेः ॥

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुरधिक-
शतप्रबन्धनिर्वाहकश्रीमन्महाव्रतयाजिश्रीमदप्पय्यदीक्षित-
सोदर्यश्रीमदाच्चान्दीक्षितपौत्रेण नारायणदीक्षितात्मजेन
श्रीभूमिदेवीगर्भसंभवेन श्रीनीलकण्ठदीक्षितेन
विरचिते श्रीनीलकण्ठविजये चम्पुकाव्ये
द्वितीय आश्वासः ॥



# तृतीयाश्वासः ।

उपासीना नानाविधिभिरुपहारैश्च विविधैः
शरण्यं लोकानां शशधरकलोत्तंसममराः ।
मृषा संधित्सन्तः प्रकृतिकुटिलैर्दानवगणै-
र्विरिञ्चस्यादेशादवृणुत गुरुं दूत्यविधये ॥ १ ॥

'परायणं नः परमं भवान्यतो
गुरुः पुरोधाः सचिवश्च दैवतम् ।
अतो वयं तावदनन्यसाधना
वृणीमहे त्वामवमेऽपि कर्मणि ॥ २ ॥'

इति प्रार्थितो देवैरिदमुवाच वाचस्पतिः—'नैतावदभिधातव्यम् । नहि किंचिदवमं नाम कर्मास्ति राजोपजीविनाम् ।

तत्तस्य कीर्तिदं कर्म तदलभ्यं तदीप्सितम् ।
राजानः पुरुषं यत्र राजकीयं नियुञ्जते ॥ ३ ॥

परंतु किंचिदत्र विवेक्तव्यम् । तथाहि—

अनालोच्य निजां शक्तिमदृष्ट्वा कार्यगाधताम् ।
औत्सुक्यादवगाहन्ते मन्दा मज्जन्ति चातलम् ॥ ४ ॥

---

४. आ अतलात् आतलं पातालपर्यन्तं मज्जन्ति ॥

सन्धिर्नाम ऋजूपायः साधुष्वेवायमायतते न पृथग्जनेषु । दूरे पुनर्दुरहंकारदूषितेषु दानवेषु । किंच । दूतवाङ्मुखकौशल-साधनीयोऽयमर्थः कथं नाम दूतदर्शनमप्यसहमानेषु संघटते । श्रूयत एव हि वैश्रवणेन प्रहितो दूतः सद्य एव समापितः सदासि लङ्कापतेः । अपिच । प्रवृत्ताः समरकर्मणि भग्नोद्यमाः सर्वतोऽपि संधित्सन्ते दूरदर्शिनो लब्धुं कथंचिदपि लिप्सितं, नतु लब्धमपि नाशयितुम् । पश्यत—

स्थानाच्च्यावयितुं क्षणात्पुनरपि स्थानेऽभिषेक्तुं च वा
शक्ताः केलिकथान्तरेष्वपि भवन्त्यर्थोद्गता यद्गिरः ।
तेऽमी सर्वसुनिर्वृता दनुभुवः संधाय किं धावता
भिक्षार्थं परितोऽधुना मघवता संपादयन्त्वीप्सितम् ॥ ५ ॥

अपि च—

गौरश्वः करिणः स्त्रियो मणिगणाः शस्त्राणि वस्त्राणि वा
यानि प्राभृतयेम तान्यपहृतान्याक्रम्य तैरेव नः ।
तद्रिक्तेन करेण रिक्ततरया वाचापि चाहं कथं
शक्तः स्यां दनुजेश्वरान्वशयितुं संद्रष्टुमप्यन्ततः ॥ ६ ॥'

इति युक्तियुक्तमुपपाद्य विरमति देवगुरौ, विहस्तेषु च समस्तेषु दैवतेषु कृतमुखः स्वयं शतमखः किंचिदिदमाचचक्षे । 'भगवन्नेवमेवैतद्यदभिहितं भवता । किंतु—

---

कृतमुखः कुशलः । 'वैज्ञानिकः कृतमुखः कृती कुशल' इत्यमरः ॥

निःसंख्यस्फुरदुत्तरोत्तरचमत्कारासु धारासु ते
वाचामक्षरमक्षरं त्रिजगतीवाग्गर्वसर्वंकषम् ।
श्रोतुं लालयितुं पुनः प्रतिसमाधातुं च वा किंचिद-
प्यर्वाञ्चः क इमे वयं यदि परं देवः स वाचां निधिः ॥७॥

परं त्विदमेकमनुस्मारयाम्यादिष्टं यदध्यक्षमेव नः समस्तानां संधानं कुरुतासुरैरिति शार्ङ्गधन्वना परमेष्ठिने, यदपि च तेन तुभ्यम् ।

शिष्टं यदत्र दुष्टं वा न विवेक्तुं क्षमामहे ।
स जानाति स जानीते त्वं जानीषे तदन्ततः ॥ ८ ॥' इति ।

अनितरशरणत्वमात्मनस्तद्दृढमुपपादयताथ देवभर्त्रा ।
प्रतिहतवचनो गुरुः सुराणां प्रकटयितुं धियमात्मनः प्रतस्थे ॥

गच्छन्नेव च स पथि सर्वं करणीयमवधारयामास । अपिच—

अयं कालो बुद्धेरयमवसरश्चाटुवचसा-
मियं युक्ता वेला दिशि दिशि यशः संघटयितुम् ।
असावत्यर्घो नः सुकृतमुपचेतुं सुमहदि-
त्यवस्यन् प्राप प्रागसुरगुरुमाखण्डलगुरुः ॥ १० ॥

ततश्च तमतर्कितोपनतमभिगम्य सह शिष्यैः, अभ्यर्च्य विधिवदर्घ्यादिभिः सपर्याभिः, आसयन्महति मणिविष्टरे, भार्गवः

---

८ सः विष्णुः जानाति । क्रियाफलस्य देवगामित्वात्परस्मैपदम् । सः ब्रह्मा जानीते । ब्रह्मणो विश्वाभिमानित्वात् क्रियाफलं कर्तृगामि, अतोऽत्रात्मनेपदम् । त्वं जानीषे । बृहस्पतेर्देवगुरुत्वात्क्रियाफलमत्र स्पष्ट कर्तृगामि ॥

स्वयमासीनस्तदनुज्ञया सविनयमिदमाचचक्षे—'अद्य मे सफलं जीवितं, अद्य हुतं विधिवदग्निषु, अद्य दत्तमतिथिष्वभ्यागतेषु, अद्याधीतमागमेषु सरहस्येषु, अद्याराधिता गुरवः, अद्य फलिनो गृहाश्रमाः । किं बहुना । अद्यायमन्वयः प्रतिष्ठितो भृगोः यदनुल्लिखितं मनोरथैः, अनवाप्यं तपोभिरपि, आशासनीयं गृहमेधिनां, आसादितमनायासेन मया स्वयमागमनं भगवतोऽधुना' इत्युदाहरति भार्गवे पुनरिदमुवाच वाचस्पतिः —

'पुत्रावुभौ प्रथमजौ भृगुरङ्गिराश्च
ख्यातौ कुले शमवतां ननु पद्मयोनेः ।
तद्भार्गवस्य कुलमाङ्गिरसः प्रपन्न-
श्चित्रीयते किमिह सोदरसंप्रयोगे ॥ ११ ॥

अपि च—

निष्ठामाश्रमधर्मपालनविधौ नित्याभियोगं शिवे
शक्तिं कर्तुमकर्तुमन्यथयितुं तन्त्रेषु राज्ञामपि ।
श्रावंश्रावमनुक्षणोपचितया प्रीत्याहमस्म्यागतो
यत्सत्यं भवदीक्षणाय हृदये तत्रावयोः साक्षिणी ॥ १२ ॥'

इत्यभिदधानो गुरुरलमतिवात्सल्यादतिलालनेनेत्यभिधाय, विसृज्य सामाजिकान्, विविक्ते पृष्टः कविना समागमनकारण-

वैश्वदेवात्पूर्वं गृहमागता अतिथयः । वैश्वदेवकाले य आगतास्तेऽभ्यागताः ॥

१२. तत्र गुरुशुक्रयोः परस्परप्रीतौ आवयोः गुरुशुक्रयोः हृदये हृदयं च हृदयं च साक्षिणी ॥

मुदाजहारैनमुपपत्तिगर्भया गिरा । 'आवेदनीयं किमखिलवेदि
भवादृशेषु । तथा हि—

जानीषे जगदेव तावदखिलं स्वप्नेन्द्रजालोपमं
जानीषे ह्यधिकारदुर्विलसितं संसारमप्यावयोः ।
जानीषे भगवत्परिग्रहपरीणाहं सुपर्वस्वपि
व्याहर्तव्यमितोऽस्ति यत्तदपि ते नापेक्षते मादृशम् ॥ १३ ॥

अपि च—

येनादिश्यत वेधसा जनिमतामद्रोहतो जीवनं
तेनैव त्वयि दुर्धियां दनुभुवामादिष्टमाचार्यकम् ।
अस्मिन् किं करणीयमर्थगहने मीमांसकैर्मादृशैः
शक्तस्त्वं त्वनुवर्तितुं तदपि खल्वाकाशवद्वर्तितुम् ॥ १४ ॥

तत्कथंचिदेकीकृत्य देवासुरानेकान्तशीलाभ्यामावाभ्यामासितव्यमिति वक्तुकामोऽहमागतोऽस्मि ।' इत्यभिहितो गुरुणा यथार्थमेव तदालोचयन् कविरिदमाबभाषे—'भगवन्नेवमेवैतत् । तथा हि—

जानाम्येव यदाह पद्मनिलयो यच्चाह विश्वंभरो
यच्चास्ते हृदि ते यथा किल तदप्यग्रे विवर्तिष्यते ।
कस्त्वं संघटनेऽसि को विघटनेऽस्म्याकृष्य विश्वात्मना
योक्ष्यन्ते नचिरेण चेह तृणवद्वातेन देवासुराः ॥ १५ ॥

तदस्तु यथातथा वा संमुखीकरिष्यामि दानवान्, संभावयिष्यामि च भवन्तं, ततो यथामनोरथमभिधीयतां' इत्युपच्छन्द्य, समानीय बलेः सभां, सभाजयन्विविधैरुपचारैः, सँल्लापयामास वासवगुरुम् । 'भगवन् दिष्ट्यासि दृष्टश्चिराय । किमागमनकारणं, किं कुशली मे भ्राता पुरंदरः, स किं करोति, किमावसति, नामापि तस्य न शृणुमहे तदाप्रभृति' इत्यनुयुञ्जाने बलौ सोत्प्रा समाददे गिरमाङ्गिरसः ॥

'देयं यस्य सदेवमर्त्यभुजगं विश्वण्डमेवाखिलं
पात्रं यस्य जगन्निधिः स भगवान् देवः सरोजेक्षणः ।
शिष्यो भूतपतेरसौ कुलगुरुर्यस्योशना भार्गवः
कीर्तिर्दानवराज तस्य भवतः कासां न पारे गिराम् ॥ १६ ।

तदभिगम्यापि सुदूरमवलोकयितव्यः पुण्यश्लोको ज इत्यागतोऽस्मि । भ्रातुरपि ते वृत्तान्तमावेदयामि ॥

यस्यैवं भूर्भुवस्स्वर्भुवनपरिबृढो वर्तसे पूर्वजस्त्वं
दुर्दान्तध्वान्तभानुः स भवति भगवानेव यस्यानुजन्मा ।
संप्राप्तो यः शरण्यं त्रिभिरपि करणैर्देवदेवं त्रिणेत्रं
प्रष्टव्यं तस्य कस्मिन् कुशलमकुशलं तस्य जिष्णोः कुतः स्यात्

स यदैव सङ्गररङ्गमारूढो योद्धुकामोऽवतस्थे तदे तमशरीरिण्या गिरा निवर्तयिष्यन्नाहवान्निर्मार्ष्टुं मुनिशापम

लिन्यमभ्युदयेन च योक्तुमधिकेन परमे तपसि परमेश्वरे नियुयुजे ॥

य: शक्यो न दृशापि गोचरयितुं सत्त्वैस्तमोगन्धिभि-
र्यत्र ब्रह्म सनातनं गिरिजया स्वैरं परिक्रीडते ।
अध्यारुह्य तमेव मन्दरमभिध्यायन्य आस्ते शिवं
कस्तं द्रक्ष्यति कः प्रवक्ष्यति कथां देवोऽपि वा दानवः ॥

प्रह्लादः प्रथमो गुरुर्भगवतस्तन्त्रेषु लक्ष्मीपते-
र्व्यातेने च विरोचनं कमलभूरध्यात्मविद्यानिधिम् ।
बाणः पारिषदाग्रणीः पशुपतेस्त्वं तु प्रवेकः सतां
सिद्धानामपि योगिनामश्रृणवं नैवं कुलं निर्मलम् ॥ १९ ॥

तदत्र महाकुलप्रसूतस्य भवतो महदनुशिष्टस्य किमावेदनीयमन्यैः। स्वयमेव महाभागः स्वरूपं पर्यालोचयतु कार्यस्य॥

ददति च वरं दत्वा सद्यस्तमन्यथयन्ति च
द्रुहिणहरगोविन्दाद्या दैत्येष्विति स्फुटमेव वः ।
न च नियमतो देवानेवानुकम्पितुमीशते
यदसुरवरान् मध्ये मध्ये समुद्रमयन्ति च ॥ २० ॥

अतो ब्रह्मेशविष्णूनामपि शुद्धचिदात्मनाम् ।
आचूडादानखाग्रेभ्यो मन्ये मायामयं वपुः ॥ २१ ॥

तदप्रदाय परेभ्योऽवकाशमन्योन्यसमवेतेषु युष्मासु—

**यन्नैश्चिन्त्यं यदौर्जित्यं यद्बलं या सुखासिका ।**
**यद्यशो यः प्रतापश्च सर्वं तदनुचिन्त्यताम् ॥ २२ ॥**

आस्तामिदम । अवश्यं हि विग्रहवत्सु युष्मासु भवितव्यमप्रकाशेन मया वा भार्गवेण वा । तथा च—

**निर्वर्त्यमाना यत्नेन निर्जरैरसुरैश्च वा ।**
**काः क्रियाः फलवत्यः स्युरावयोरप्रकाशयोः ॥ २३ ॥**

आखण्डलस्य तु मतिरन्यादृशी—

**क्षीयतामग्रजैः स्वर्गो जीयतामनुजेन वा ।**
**सर्वथा भ्रातृभाग्येन संवृत्तं नः प्रयोजनम् ॥ २४ ॥** इति ।

अहं तु भवतः मार्वज्ञ्यादविशङ्कमवादिषम् । न खल्वात्मनः सचिवोक्तमित्येवादरणीयं परसचिवोक्तमिति वा परिहरणीयं, धीमतां धीरेव सचिवः शासिता' इत्यभिधाय विरमति देवगुरौ, अवलोकितो बलिना, भार्गवः सामाजिकाननुमोदयन्निदमाचचक्षे—'भो भो सकलाशयमर्मज्ञाः, ममयज्ञाः संधिविग्रहयोः, पारीणा नीतिपथे भवन्त एव प्रमाणमर्थेषु ॥

**यद्यप्यद्य गतश्रियः सुमनसो यद्यप्यसौ तद्गुरु-**
**र्यद्यप्यस्ति फलं न किंचिदपि नः संधाय साध्यं सुरैः ।**
**पर्यालोच्यमथापि किंचिदुदधिं निर्मथ्य लब्ध्वा सुधां**
**पास्यामो वयमित्यसौ रहसि मां यत्प्राह दिव्यो मुनिः ॥'**

---

२३. गुरुशुक्रौ यदा अस्तगता तदा शुभकर्माणि न कुर्वीतेति हि दैवज्ञाः ॥

इति । तच्छृण्वन्त एव दानवाः संमोहिता मायया वैष्णव्या सद्य एव संमेनिरे, आहुश्च—

'संधास्यामः शमथनगिरा निर्व्यलीकं सुरैः प्राक्
क्षोभिष्यामो जलधिममृतं तत्र लप्स्यामहे च ।
पास्यामश्चाप्यथ तदुभये यद्यमी साधवः स्यु-
र्नैवं चेत्किं विहतमियता बाहवः क्वागमन्नः ॥ २६ ॥'

इति । ततः साधु साध्वित्यनुमोद्यमानाः सचिवेन, प्रस्थाप्य वाचस्पतिं, प्रथमतः संधास्यन्तः प्रतस्थिरे दानवाः सद्य एव मन्दरम् । पूर्णमनोरथश्च गुरुः पुनरुपावर्तमानः संददर्श मन्दरमेत्य संततशिवध्याननिर्धूतकल्मषान् शिवार्चनव्रतिनः शिवार्पितप्राणान् शिवनामकीर्तनपवित्रितमुखान् शिवकथापारायणपरायणान् शिवाहंभावभावितान् शिवाद्वैतवादकोविदान् भस्मदिग्धतनूरुहान् भसितत्रिपुण्ड्रमण्डितपञ्चाष्टादिस्थानमनोहरान् प्रालम्बिजटाजूटवलयावलम्बितशकुनिकुलनादशकुनावेदितसंनिहितशांभवप्रसादान् शुद्धाध्ववर्तिनो विज्ञानकलमानिव शुनासीरमुखान् बर्हिर्मुखान् ॥

आख्याय निखिलं वृत्तमाशयं च विरोधिनाम् ।
आदितेयान् स दैतेयैः संधातुं समनीनहत् ॥ २७ ॥

ततो महता बलेन महता संनाहेन महता चावधानेन संधातुमागताः सर्वेऽपि दानवाः, प्रकृतिकुटिला अपि परिणत-

तपोविशेषेण परिक्षीणकल्मषतया दुर्दर्शान् मध्याह्नभास्करानिव, दुरासदान् युगान्तपावकानिव, विस्रम्भणीयान् विश्वसृज इव, पुनः पुनर्दर्शनीयान् पूर्णसुधाकरानिव, संलक्ष्य गीर्वाणान् , संत्यज्य दुर्विशङ्कितानि, प्रतिषिध्यानुयात्रिकान्, परिहृत्य शस्त्रास्त्राणि, निर्मलेन मनसा निरन्तरं परिरेभिरे । संक्रन्दनोऽपि यथान्यायं समागम्य दानवैः, अभिवन्द्य पुरोधसं भार्गवं, अनुमतो वाचस्पतिना, किरन्निव सुधारसं, किंचिदिदमाचचक्षे—

'साफल्यं तपसामिदं सुमहतां साफल्यमक्ष्णामिदं
साफल्यं पितुराशिषामिदमिदं साफल्यमस्यायुषः ।
श्रीमत्काश्यपतातपादचरणस्थानोचितैर्भ्रातृभि-
र्ज्यायोभिर्यदहं विरोचनमुखैर्वात्सल्यपात्रीकृतः ॥ २८ ॥

अपि च—

आराद्धा ननु यूयमेव गुरवस्त्रैलोक्यराज्यार्पणा-
दाराद्धा गुरुभार्गवप्रभृतयो ब्रह्मर्षयः शक्तितः ।
किं कर्तव्यमितोऽपि केवलमिह श्रान्तोऽस्मि शान्तोऽस्मि च
प्राप्तुं तत्परमामृतं यदि भवत्याज्ञा यतिष्ये सुखम् ॥ २९ ॥'

इति वदन्तं भ्रातरमिन्द्रमिदमाहुरसुरेश्वराः 'मैवमाखण्डल मैवम् ।

त्वमसि शतक्रतुस्त्वमसि नीतिपथे कुशल-
स्त्वमसि दयास्पदं भगवतः प्रमथाधिपतेः ।
अपि खलु बालकेन भवता भवता मघवन्
निखिलमनाकुलं कुलमिदं प्रतितिष्ठते नः ॥ ३० ॥

व्यापृते त्वयि तपसि राज्यमिदं व्याकुलीभवेदिति सं रक्ष्यतेऽस्माभिरनियुक्तैरपि साह्यमेवानुचिन्त्य भवतः ।

एकेन विधृतं राज्यमियन्तो वयमीदृशाः ।
निर्वहन्तोऽद्य जानीमो नैपुण्यं वत्स तावकम् ॥ ३१ ॥

अमृतं यदि भोक्तव्यमनुमन्यामहेतराम् ।
संविभज्यैव तद्भोज्यं न निर्भज्येति नो मतिः ॥ ३२ ॥

तदाख्यातु भवानर्णवमथनोपायमादिष्टं नारायणेन' इत्यनुयुञ्जानेषु दानवेषु, यथाश्रुतमाख्याय पुरन्दरस्तमेव मन्दरमुत्पाट्य सागरे निपातयितुमुत्साहयामास बलिम् । ततः 'कियदेतदुत्पाटनं नाम गिरेः, विधमामो मुखमारुतेन, विक्षिपामोऽङ्गुलिस्फोटेन, समुद्धरामो वामहस्तेन, संक्रमयामः सायकेनैकेन' इति बलोत्सेकादुच्चावचं गर्जत्सु दानवेषु, बलिरिदमवादीत्—'हन्त कथमर्भका इव यूयमकृतप्रज्ञा इव निरङ्कुशं प्रतिजानीध्वे ।

विंशत्यापि भुजैः पुरा गिरिवरं विक्षोभयन् शूलिनः
पादाङ्गुष्ठनखाग्रयन्त्रणदलद्दोःसंधिबन्धाश्चिरम् ।
क्रोशंक्रोशमवाप वार्षिकनिशामण्डूकवद्यः श्रमं
युष्माभिः श्रुतिगोचरं न गमितः शङ्के स लङ्केश्वरः ॥ ३३ ॥

अपि द्रष्टुमशक्यो यः सिद्धैरपि महर्षिभिः ।
विना शंभोः प्रसादेन कथमुत्पाटयेम तम् ॥ ३४ ॥

---

३२. निर्भज्य एक भागशून्यं कृत्वा ॥

तदद्य वयं सर्वे प्रपद्य भगवन्तमुमाकान्तं प्रसाद्य वाङ्मनःकायैः. प्रार्थयेमहि प्रार्थनीयं' इति । ततः साधु साध्वित्यभिनन्द्यमाना भार्गवाङ्गिरसाभ्यामन्योन्यकृतसंविदो देवासुराः, प्रतिपद्य मन्दरं शैलं, प्रणिधाय मनांसि, वर्तमानाः कठोरे तपसि, वाग्भिरस्तुवन्नित्थमम्बिकारमणम्—

'युगविगमोन्मिषद्विषमलोचनकोणपत-
द्धुतवहविस्फुलिङ्गहुतसर्वजगद्धविषे ।
अचलधनुर्धराय हरिणाङ्कशिखामणये
विजयजयैकहेतुविशिखाय नमो भवते ॥ ३५ ॥

शिवं ध्यायस्यन्तः सकलजगतां यच्छसि शिवं
शिवोऽसि त्वं नाम्ना ननु शिवतरश्चासि विदितः ।
शिवार्थी जन्तुस्तच्छिवमखिलभावेन भगवन्
भवन्तं हित्वान्यं शरणयतु कं न्यायशरणः ॥ ३६ ॥

तदिदानीम्—

मन्दिरं क्षाळयन्तस्ते मन्दरं दुग्धसागरे ।
अमृतं लब्धुमिच्छामस्तद्भवाननुमन्यताम् ॥ ३७ ॥' इति ।

ततस्तथा कुरुतेति घनस्तानितगम्भीरया गिरा गगनसंभवया संतोषिताः सन्तोऽसुराः सुराश्च समनह्यन् ॥

विनिघ्नन्तः पादैरथ विचलयन्तः करतलै-
रुदस्यन्तो दण्डैरुपरि च किरन्तस्तमिषुभिः ।

निषेदुः श्रान्तास्ते यदपि च निषेदुर्दनुभुवो
निमित्तं दुष्टं तन्निखिलमुशना तेषु जगृहे ॥ ३८

अथ प्रतीक्षमाणश्चरलग्नमाचार्यो दिवौकसां 'संवर्तोचित-रूपमालम्ब्य सर्वतो वाहि' इति संदिदेश गन्धवाहम् ॥

अथ दिवसावसान इव पद्मभुवः पवनः
स्वयमकृत क्षणादिव विदिक्षु च दिक्षु चरन् ।
अलघुविघूर्णितार्णवसमुक्षितकुक्षितल-
क्षितिवलयार्द्रताशिथिलमूलमहार्यकुलम् ॥ ३९ ॥

स्तोकस्तोकप्रचलदनिलग्रासदुर्भिक्षखेदैः
कालं कालं कथमपि चिरं यापयांचक्रिरे ये ।
आकण्ठं ते पपुरिममविच्छिन्नधारं समीरं
प्राप्ताः शंभोरुपकरणतां पन्नगास्तन्नगाग्रे ॥ ४० ॥

अथ तमदृष्टचरं वेगमनलसारथेरभिनन्दत इव मन्दरस्य गिरेरलक्ष्यत मनागिव शिरःकम्पः ॥

चकम्पे हन्तायं गिरिरनुचकम्पे पुरहरो
जहीतेदं क्लैब्यं जहित च वृथावास्थितामिदम् ।
इति स्वेन स्वेन व्यवसितधियः काश्यपसुताः
समेता गर्जन्तः सपदि चलयामासुरचलम् ॥ ४१ ॥

तदानीं च—

---

३९. पद्मभुवः दिवसावसानं प्रलयः ॥

निष्पतद्रुमसुत्पतत्खगमद्भुतस्खलदश्मभू-
जर्झरस्नुतनिर्झराम्बुझळझळारवभैरवम् ।
गर्भगह्वरनिर्भरभ्रमदुद्धटानिलपूरित-
क्रन्ददन्तरकन्दरं किल मन्दरं ददृशुर्जनाः ॥ ४२ ॥

गर्जन्तश्च ते तदनु पर्जन्या इव गणयन्तश्च करगतमिव कार्यमशेषं, पूर्वतो दिक्पतीन्, दक्षिणतो देवानपरान्, पश्चिमतो बाणं सहस्रबाहुं, उत्तरतो महासुरानितरानपि विभज्य विनियुञ्जानाः, खाते परितः परिखावलय इव मूलगर्ते कराञ्चलानि निदधानाः, परित्यजन्तः प्रहरणानि, परिहरन्तोऽङ्गुलीयकानि, आबध्नन्तः कटितटेषूत्तरासङ्गं, आरोपयन्तः कङ्कणान्यङ्गदस्थानं, उपवीतयन्तो निवीतलम्बीनि हारमण्डलानि, उद्बोधयन्तः परस्परमसकृदपि 'समं निधत्त कराञ्चलानि, सममुत्तम्भयत, समं विस्रंसयत, सममुच्छ्वसित, समं निःश्वसित, समं कुरुत बलानि, परथा विशीर्येयुः शिखराणि, विनमेदयमेव मन्दरः, क्वापि चलेदपि ततो भद्रपीठं चन्द्रापीडस्य, समुद्विजेत दुहिता शैलराजस्य, क्षुभ्येयुः प्रमथाः, कुप्येदपि शैलादिः, चतुरन्तयानगत इव भगवानम्बिकारमणश्चतुरतरमस्माभिर्वाहनीयः' इति, वादयत्सु वादित्राणि गन्धर्वेषु, गायन्तीषु गाथाः किन्नरीषु, नृत्यन्तीषु निर्जरवारकान्तासु, श्लाघमानेषु चारणेषु, प्रयुञ्जानेष्वाशिषः परमर्षिषु, वर्षत्सु दिव्यवलाहकेषु पुष्पवर्षाणि, हर हरेति तारध्वनिभिरापूरयन्तो विष्वयण्डमण्डलमुन्नमयामासुरुर्वीधरं मन्दरम् ॥

आपातालनिमग्नमूर्तिनि बलान्मूले समुन्मूलिते
शैलस्यास्य भुजङ्गराजनगरप्रासादशृङ्गायिते ।
खेलन्त्यः शतशः फणीन्द्रसुदृशः स्वच्छन्दमत्रास्पदे
हृष्यद्भिः प्रतिलेभिरे दिविचरैरक्लेशमप्रार्थितम् ॥ ४३

अपि च—

अभ्यर्णस्थलभाजि तत्र शिखरिण्यामूलमुन्मूलिते
तत्क्षोभक्षुभिते च काञ्चनगिरौ किंचित्समाकुञ्चिते ।
विभ्रश्यद्दृढभित्ति विश्लथपुरद्वारं विशीर्णत्रुट-
त्सौधोत्सेधविटङ्कसंघमजनि स्थानं सुराणां तदा ॥४४॥

समुद्धृत्य तमारसातलप्रतिष्ठमपि सद्यः समारोपितं कलभमिव लीलया प्रस्थिताः दुग्धार्णवं प्रति देवासुराः । अशिथिलशिखरं अप्रकम्पनितम्बं अखण्डितगण्डोपलं अनुज्झितनिर्झरप्रवाहं अस्फुटितपर्यन्तदर्यन्तरं अभञ्जिततरुपुञ्जं अनुत्खातलतावितानं अस्पन्दमृगबृन्दं अनुद्भ्रान्तशकुन्तं अव्यापन्नपन्नगं अनवसन्नकिन्नरीगानं अस्तब्धसिद्धचारणकोलाहलं अविश्रान्तगान्धर्ववादित्रं अनुपरुद्धतपोधनध्यानं आनन्दयन्तो भगवन्तमुमाकान्तमवहन्त मन्दरम् । स च नीयमानः सर्वैरपि सुरासुरैरखिलभुवनाधारस्य पशुपतेरप्याधारतावलेपादिव पादैराचक्राम शिरांसि पर्वतानाम् । परितःस्फुरदच्छनिर्झरापदेशेन प्रत्यक्षमिव विचकार दिङ्मुखेषु यशांसि निर्मलानि । आकाश एव नीयमाने तस्मिन्, अधस्तनीषु दिव्यभूमिषु तासु तासु तपस्यन्तस्तपोधनाः कतिचि-

दतिचकिताः प्रायुञ्जत परमाशिषः, परिपेठुः स्वस्त्ययनानि, अजपन्नभयंकरं, आवर्तयन्नमृतमृत्युंजयं, अनुदध्युरापदुद्धरणमम्बिकारमणं, आशशंसिरे च बलातिबलाभ्यामश्रमं दिविचराणाम् । महाप्रकाशमणिगणाकीर्णस्य तस्य चलतः पथिवशादागत्य पार्श्वतलमध्वप्रतिरोधादत्रैव निलीयमानः पतिरपि त्विषां प्रदीप इव दिवा प्रवर्तितो भग्नतेजा ददृशे । अपि च पुनरक्लेशमानीयमाना पत्या सह कात्यायनी रुचिरान् प्रदेशान् पश्यन्ती विविधानि वस्तूनि परिपृच्छन्ती प्रणयिनमभीक्ष्णं प्रसन्नेन चेतसा स्थापयिष्यतोऽपि गिरिमनुजगृहे देवासुराननुजगृहे ॥

उड्डीय स्वयमुत्पतन् गिरिरसौ वाचैव नेतुं क्षमो
भग्नस्कन्धशिरोधरैर्दिविचरैरित्थं यदुह्यते ।
एतत्पर्वतपक्षातिक्षतिकृतो मूर्खस्य दौष्कर्म्यमि-
त्यायस्ताः पथि पर्यभाषिषत ते सर्वे सुपर्वेश्वरम् ॥ ४५ ॥

अपि च—

भग्नो यस्य दशाननः प्रचलने किंचित्प्रवृत्तः पुरा
शक्यं तस्य गिरेः कथं नयनमित्यस्ताविषुः साधवः ।
अन्ये चक्षमिरे न तद्भवति का श्लाघात्र शाखामृगै-
रानीताश्च निपातिता हि जलधौ शैलाः समूला इति ॥४६॥

इत्थमतिभारभङ्गुराः सुरासुरा यावदासेदुरन्तिकं दुग्धनिधेस्तावदुद्वेगः श्वेतद्वीपसदामुदजृम्भत । 'पश्यत पश्यत पर्यन्ते

नीयमानं महागिरिं, पातयिष्यते नूनमत्रायमर्णवे, परिप्लावयिष्यते च स निःशेषमिदमन्तरीपं, तदद्यैव सज्जीभवत समुत्तिष्ठत सर्वतोऽपि वेलामुच्छ्रयध्वं' इति, 'हन्त केनेदमुत्प्रेक्षितं बकबन्धकौशलं, किंचिदपि चेदुच्छ्वसिति सागरः किं करणीयमुच्छ्रितयापि वेलया, तदारोक्ष्यामो वयमद्यैव वैकुण्ठमर्कमण्डलं वा धाम त्रिधाम्नः' इति, 'अनुचितमेतदालोचितं, अयुक्तं हि सेवकानामपहाय भगवन्तमन्यत्र गन्तुं' इति, 'किमुच्यते भगवन्तमपहायेति, किं न विचारितं भवता, भगवानेव मन्दरपातदर्शनकुतूहलव्याजेन प्रस्थातुकामो वर्तत इति, कति वारानेष पपात मन्दरः, कति वारान्नोदजृम्भत सागरः, कस्यापि ब्रह्मणः कल्पे न जानीमो वयं विप्रवासं, अहो खल्वमीभिराधुनिकैर्बाध्यामहे भागवतैः' इति, 'भवतु भवतु कथयन्तोऽपि दृढमितोऽपि कबलिताः सरिद्भिः सागरैश्च महत्स्वायतनेषु महीगतेषु शार्ङ्गपाणेः कति न भवद्विधाः परमभागवताः, तदास्यतामिहैव भवद्भिः, आधुनिकास्तु वयमज्ञातपारावारा गोपायन्तः क्वचिदात्मानं गोविन्दमेव निरन्तरमनुसंदधीमहि' इति च विप्रवदतां विविधान्वादान् पश्यतामसकृदुन्नम्योन्नम्य, परिपृच्छतामागच्छतो वैमानिकान्, परिभ्रमतामभितोऽपि कोलाहलेन महता, पारिषदानामग्रणीः कुपितो विष्वक्सेनो बहिर्निर्गत्य परितोऽपि चक्षुः प्रसारयन्नवलोकयन्नानीयमानमभ्यर्णे एव मन्दरं, अवधारयन्ननुपदमेव तस्य सिन्धौ निपातनं, विज्ञापयामास विनयेन विदितवेदितव्यमपि स्वधर्म इति विश्वंभरम् ॥

व्यत्यस्तकौस्तुभमवप्लुतवैजयन्ति
विस्रंसमानकनकाम्बरलोभनीयम् ।
सद्यः फणीन्द्रशयनादुदतिष्ठदीशः
कैलासशैलशिखरादिव कालमेघः ॥ ४७ ॥

दिव्यैः पञ्चभिरायुधैः सविनयैराबद्धसेवाक्रम-
स्तत्कालोपनतैस्तपोधनगणैर्धन्यैर्वृतः कैरपि ।
अभ्यर्णे वसतस्तदा खगपतेरालम्ब्य हस्तं शनै-
र्विष्वक्सेननिवेद्यमानसरणिर्विश्वंभरो निर्ययौ ॥ ४८ ॥

अथ तमतर्कितोपनिष्क्रान्तमरविन्दनाभमवसरज्ञो विधि-रर्धपथे समेत्य सह महर्षिभिर्विविक्तसेवावसरलाभविस्मयानन्द-मन्थरः पश्यन्तमचलनिपातकौतुकं परिवार्य केवलमवतस्थे ॥

नवकुवलयदामश्यामलस्निग्धमुग्धं
नलिननयनमाद्यं तत्त्वमालोकयन्तः ।
परिजहुरमरौघाश्चेतसा कार्यभारं
परिजहुरुभये ते पाणिभिः शैलभारम् ॥ ४९ ॥

ततश्च ।

सुरासुरकरोदरस्खलितशैलमूलस्थल-
स्थितोपलतलाहतिक्षुभितसिन्धुबन्धूत्थितः ।
भ्रमत्तिमितिमिङ्गिलभ्रमितवालकोलाहलैः
समं निखिलमम्बरं परिववार तारस्वनः ॥ ५० ॥

---

५०. सिन्धूनां सरितां बन्धुः समुद्रः ॥

स्खलदचलसमुद्भवल्लोलकल्लोलकोलाहल-
व्यतिकरबधिरभ्रमत्कूर्मनक्रद्विपक्रन्दितैः ।
स्फुटितकमलजाण्डभाण्डप्रचण्डस्वनोत्प्रेक्षण-
क्षुभितविविधमुक्तहाहारवैश्चाहसीदच्युतः ॥ ५१ ॥

निर्मग्नमन्दरमणिद्युतिसंप्रदिग्धा
निष्पेतुरम्बरतले पयसः कणा ये ।
लग्नाश्चिराय लिकुचामलकाम्रमात्रा-
स्तारास्त एव परिणेमुरिति प्रतीमः ॥ ५२ ॥

पथि गिरिवरादस्माद्धारावसन्नसुरासुर-
प्रतिपदकृतस्कन्धव्यत्याससंभ्रमकम्पितात् ।
मणिभिरभितो यस्यां यस्यां भुवि स्खलितं क्वचि-
त्समजनि खनिः सा सा नाम स्थलेषु जलेषु च ॥ ५३ ॥

अपि च विदूरादम्बरतलादापततोऽस्य महता वेगेन प्रकीर्यमाणे पर्यन्तगते निरवशेषं परिपीयमाने च दरीमुखैरेव परिसरगते पयसि, शून्यमिवार्णवं मन्यमाना नभश्चरा निर्मम्ज्जुरुभयेऽपि भये । उन्मथितेषु च तन्मूलघट्टनादर्णवचरेषु जन्तुषु, ततः परिभ्रष्टाः करिण एव जलकरिणः, किराता एव जलमानुषाः, निर्झरचराः शफरा एव तिमयश्च तिमिङ्गिलाश्च संपेदिरे । अपि च पुनरवगाहमाने रसातलं गिरावभ्यर्णगतं दुग्धमादायादाय सुखमभिषिञ्चन्तः पारमेश्वरं लिङ्गमभ्यनन्दन्नन्दिमुखा गणाः । ऊर्ध्वमाद्युलोकादुत्पतता च दुग्धपूरेण परि-

प्लाविता सिद्धनदी बभूव दुग्धनदी । संसिक्ताश्च पयसा मधुरेण सर्वतो नन्दनोद्यानवनपादपास्तदादि सुधामधुराणि सुवते फलानि ॥

मज्जन्मन्दरशैलकन्दरपुटव्याघूर्णदर्णोभर-
स्वैरोज्जागरघोषभीषणपयःकल्लोलिनीवल्लभाः ।
खेदस्तम्भितकिंपचानविबुधप्रारब्धभूरिस्तवा
गोविन्दस्य कुतूहलं विदधिरे ते केचिदेकक्षणाः ॥५४॥

मज्जति मज्जति शैले पतति च पततीह कुलमिदं द्युसदाम् ।
शरणं शरणमतस्त्वं शार्ङ्गधरेति प्रचुक्रुशे विबुधैः ॥ ५५ ॥

ततश्चकितसुरासुरस्तोमसंस्तूयमानो भगवानरविन्दलोचनः प्रसादविमलपावनैः परिवहत्करुणासारसान्द्रितैः कटाक्षैरनुगृह्य, कल्पतरुपल्लवोल्लासिना कैवल्यलक्ष्मीनिवासमन्दिरेण करारविन्देन तानाश्वासयामास । तत्क्षणं च भूभारभङ्गुरभुजङ्गपुङ्गवभोगवलय-परिबृंहणादिव कुलिशकर्कशेन शाणनिकृष्टवज्रफलकास्निग्धेन सर्वतोऽप्यशेषभुवनात्मनाप्ययुतयोजनमात्रविस्तारशालिना चरमाङ्गेन, पाराशर्यसंक्षेपपरिमितैरनुश्रवैरेव चतुर्भिश्चरणैः, संकोचविकासशीलया माययेव कन्धरया, समस्तागमस्तोममस्तकेनेव च मस्तकेन परमाद्भुतेन समुद्भवन्नवानिगर्भाच्चापमुक्त इव सायकः समग्रेण रंहसा समुत्पपात महान् कमठः ॥

---

पाराशर्यः व्यासः तेन कृतः संक्षेपः तेन, परिमितैरनुश्रवैरेव चतुर्भिश्चरणैः । वेदानां चतुर्धा व्यासकृतसंविभागादारभ्येति वेदितव्यम् ॥

प्रत्युद्यत्कमठकठोरपश्चिमाङ्ग-
व्यासङ्गप्रशिथिलमूलसंनिवेशः ।
उत्क्षिप्तः प्रतनुरिवोपलो बलिष्ठै-
रद्रिर्द्रागुदपतदर्णवाद्विदूरे ॥ ५६ ॥

उद्भ्रान्तसागरपयोभररिक्तगर्भ-
पर्यन्तकन्दरगळत्पवनो गिरीन्द्रः ।
मग्नोत्थितः सलिलतो महता श्रमेण
निःसीमनिःश्वसितखिन्न इवाबभासे ॥ ५७ ॥

आलक्ष्य च तदाश्चर्यमानन्दमन्थरेषु बृन्दारकेषु, कृतार्था वयममुनाऽनुग्रहेण किमतः परं करवामेति विज्ञापयत्सु विनयेन गरुडध्वजं, समानयत वासुकिमित्यनुशशास समीपगतश्चतुराननः । ततस्तथेति प्रतिगृह्य शासनं तस्य निर्जिहाना बहिर्निर्जराः समानग्रामा यूयमेव समानयत वासुकिं सान्त्वनेनेति प्रार्थयामासुरसुरवरान् ॥

प्रागेव पातालजुषां प्रवृत्तिं जिज्ञासवो दारकुमारकाणाम् ।
ते मन्दरोद्धारबिलाध्वनैव सद्योऽवतेरुर्दनुजाः प्रहृष्टाः ॥ ५८ ॥

प्रविशन्तश्च ते ददृशुरतर्कितोद्धृतमन्दरमूलकन्दरोद्भ्रान्तमूर्च्छितपन्नगाश्वासनपरिभ्रान्तबन्धुजननिरन्तरं, अर्णवनिमज्जदचलराजसंमर्दनिर्दलदतलवितलादिलोकनिष्पेषघोषभीषिताश्वसदाश्वस्ताविहस्तजानपदजनाकीर्णं, अतितूर्णमुद्गच्छदादिकच्छपनिष्ठुर-

पृष्ठसंघट्टनस्फुटितशैलशिलाभङ्गसमुच्चलदभङ्गुरस्फुलिङ्गपरिष्वङ्गदंदह्यमाननगरग्रामपल्लीनिवेशं, निरन्तरोत्पातधारानिरीक्षणसाध्वसेन पतिष्यति नाम भूतलं, चलिष्यति नाम सुमेरुः, स्फुटिष्यति नाम विध्यण्डकपालं, प्रवेक्ष्यति नाम सागरः, परित्यक्ष्यति नाम शेषो भुवनभारमित्यसंभावितमूलमनुक्षणमुच्चलन्तीभिः किंवदन्तीभिः समाकुलमभितो रसातलम् । समागम्य ते वासुकिं सभाजिता यथोचितं समावेद्य सागरमथनसंरम्भम्, अनुपदमेव कथान्ते कथयामासुः शनैरेव भवितव्यं भवता मन्दरवेष्टनदाम्नेति। अनुमोदमानो वचनममीषामाह च स्मेदमुरगपतिः—'अहो चिराय मया श्रुतोऽयमभ्युदयो भ्रातृजनस्य । यत्किल समागम्य दैतेयैरादितेयाः साधयन्ति मनीषितम् । तत्र स्वयमनियुक्तैरपि काद्रवेयैर्भ्रातृभिस्तत्साहायकमाचरितव्यमिति न्याय एव चोदयति, अत्र किमावेदनेन भवताम् । परं तु—

मूले वालधिमग्रतः सुरगिरेर्मौलिं च मे बध्नता
कल्पे प्राचि पिनाकिना भगवताकृष्टोऽस्मि यल्लीलया ।
तत्कालश्लथसंधिबन्धपरिवृत्तास्थीनि मर्माणि ता-
न्यद्यापि स्मितजृम्भितक्षवथुषु स्वाच्छन्द्यमुच्छिन्दते ॥५९॥

अपि च—

यस्तल्पेष्वपि कोमलेषु शयितुं शक्नोमि नाश्मस्विव
त्यक्त्वा कुण्डलतां स्वपन्नपि च यो नायन्तुमद्योत्सहे ।
पाषाणद्रुमगुल्मकण्टकदरीकूटप्रपातोद्भटं
सोऽहं वेष्टयितुं क्षमः किमचलं गात्रैर्जराजर्जरैः ॥६०॥

तदद्य किंचिदनुगृह्य मां, नयन्तु भवन्तस्तक्षककार्कोटकशङ्खचूडगुलिकैरावतपद्ममुखान् महात्मनस्तरुणान् फणाधरान्, अन्ततो नयत जितश्रमं वा शेषं' इत्यभिदधानो वासुकिः पुनरित्थमभिदधे दानवैः—

'क्षुद्रैः किं करणीयमेभिरुरगैः क्षीणायुषामन्तकै-
र्या शेषं नयतेति वागजनि ते सैवास्तु सत्याधुना।
भूभारे ह्युपयुक्त एष विदितः सर्वैस्ततोऽन्यः पुन-
स्त्वं शेषो भवसीति निश्चितधियस्त्वामेव याचामहे ॥ ६१ ॥

अपि श्लक्ष्णीकुर्मो मणिवदचलं पाणिकषणै-
रपि त्वां वोढास्मः सुखशयितमादुग्धजलधेः।
सुखं चाकर्षामस्तदुपरि यथा तुष्यति भवान्
प्रसीदायच्छस्व प्रचल शनकैः प्राप्नुहि यशः ॥ ६२ ॥

किं बहुना। प्रातिवेशिका वयं भवतः परिचितहृदयाश्च चिरसंवासेन। ततस्तत्त्वमेतदवधार्यताम्—

महद्भिर्ग्रथ्नीमः स्रजमजगरैर्मन्दरचरै-
र्भरुद्भिर्वा पाशैर्भ्रमयितुमलं स्तब्धमचलम्।
कराग्रैर्मथ्नीमो जलधिमथवा किं क्षरति नो
यशस्तु द्रातुं ते पुनरपि वदामः पुनरपि ॥ ६३ ॥'

इति प्रार्थितो दानवैरनुत्तरो भुजगपतिः प्रस्थातुकामो वलयमेकमुत्सृजन्यावदुत्तस्थौ, तावदर्णवमथनक्षोभशङ्कितपतना-

मवनीं धारयितुमवस्थापितः स्वयंभुवा वज्रस्तम्भ इव संददृशे । ततः प्रतिष्ठध्वमित्यनुज्ञाय दानवान्, प्रसारयन् मन्दरोद्धाररन्ध्राभिमुखं मुखं, अनुवृत्तस्तक्षकादिभिः, अनुमतो भूभारवहननिश्चलेन भगवता शेषेण, शनैः शनैः शिथिलीचकार भोगवलयान् ॥

**अथ तेन बिलाध्वना विशन्तं पवनं पार्थिवगन्धसारसान्द्रम् ।**
**प्रथमे पथि विश्रमे फणीन्द्राः पपुराकण्ठमयाचितोपपन्नम् ॥**

ततः प्रपात इव परिहृतानिम्नोन्नते तस्मिन् बिलद्वारे, महता यत्नेन मन्दंमन्दमुत्सर्पन्तो दशयोजनं, अधःपतन्तः शतयोजनं, आरुरुक्षन्तः पुनः, अवेक्षमाणा निम्नोन्नतानि, फूत्कुर्वन्तो भूयसा यावदश्राम्यन्ननिलाशनाः, तावत्करावलम्बनप्रदानापदेशेन परिघतोमरगदाप्रासादिभिः प्रहरणैः प्रकल्पयन्त इव सोपानानि, परिकर्षयन्तः शनैः शनैरिव प्रापयामासुरवनितलं फणाधरानसुरेश्वराः ॥

**आपातालात्फणधरपतेरा च मूलात्सुमेरो-**
**रद्राक्षुस्ते स्तिमितपतितं भोगमायासयोगात् ।**
**मन्थानाद्रेरवनिवलयादुद्धृतस्यातिवेगा-**
**दन्तर्लग्नं त्रुटितघटितं मूलमेकं भुवीव ॥ ६५ ॥**

अथ कथंचिदाश्वस्तमहिपुङ्गवमालक्षयन्तो दानवा नगनगरग्रामनदनदीनदीशसंतानदन्तुरेण भौमेन पथा परिक्रमणमावेद्य मान्द्यहेतुं, आसाद्य तदनुज्ञां, आफणामण्डलादा च

वालमूलादुद्धृत्य कराञ्जलैर्युगपदुपनिवेशयन्तः स्कन्धेषु तं, अपरान् पुनर्महोरगानङ्गुलीभिरङ्गुलीयकानीव, पादैर्नूपुराणीव, पाणिभिः कङ्कणानीव, कटिभिः कटिसूत्राणीव, वक्षसा हारवलयानीव, वहन्तो लीलया तारापथेन पथा दुग्धोदधिमभिप्रतस्थिरे ॥

दूरादलक्ष्यत सुरैर्दनुजांसलग्ना
द्राघीयसी भुजगपुङ्गवभोगरेखा ।
तिर्यक्प्रवाहमुपयातवतीव दिष्ट्या
मन्दाकिनी निपतिता शिखरे हिमाद्रेः ॥ ६६ ॥

पायंपायं पवनमभितः स्थौल्यमापाद्यमानं
वाहंवाहं फणधरपतिं विश्लथस्कन्धबन्धाः ।
प्रत्युद्यातैः सुरपरिबृढैर्भारविश्रान्तिहेतोः
सार्धं दैत्या भुवि निदधिरे संनिधौ शार्ङ्गपाणेः ॥ ६७ ॥

अथ शिथिलांसमांसलितखेदविनोदकृते
परिकलिताङ्गभङ्गमभितोऽपि वपुर्धुवताम् ।
करचरणोदराङ्गुलिभुजान्तरकन्धरतो
भुवि भुजगा निपेतुरितरे विबुधद्विषताम् ॥ ६८ ॥

खर्वोन्नतासुरस्कन्धसंधारणकृतां व्यथाम् ।
वीजितो विबुधैर्दैत्यैर्विजहौ वासुकिः शनैः ॥ ६९ ॥

परिश्राम्यतश्च वासुकेरतिवेलश्वासनिःश्वासपरम्परापरिणमदुपचयापचया परिणतशरकाण्डपाण्डरा च भोगयष्टिरभिपूरयितुं दुग्धसागरमापतिता विदूरादुच्छृङ्खलतरङ्गमालासमाकुला स्तब्धेव सिद्धनदी सुरासुरैरालुलोके ॥

क्षितिधरपरिपातक्षुभ्यदम्भोधिगर्भ-
प्रचलदमृतबिन्दुस्यन्दसान्द्रैः समीरैः ।
फणिपतिरपनीतस्वेदखेदो ददर्श
त्रिजगदनभिवेद्यं देवमाद्यं मुकुन्दम् ॥ ७० ॥

प्रणिपतन्नथ वासुकिः फणामणिप्रकाशधारानीराजनैराराधयामास चरणारविन्दमरविन्दनाभस्य, आह चेदम् 'भगवन्नशिक्षितोऽस्मि शेष इव व्याकरणे, अनभियुक्तोऽस्मि पद्म इव पाञ्चरात्रे, अकृतश्रमोऽस्मि कम्बळाश्वतराविव गान्धर्वे, केवलमहं भगवतो मेरुधन्वनः सायकसंधानावसरसंपन्नं भवतश्चरणारविन्दविन्यासभाग्यं परिशीलयन्नान्तरेण करणेन, परिपालयन् भवच्छासनं, आकाङ्क्षन् भवतो नियोगानुग्रहमासे भवदधीनः' इति । तदनु च—

'किं तन्त्रैः किं मन्त्रैः किं व्याकरणेन किं पुराणेन ।
चरणाम्बुजे निमग्ना धिषणा यदि पद्मनाभस्य ॥ ७१ ॥'

इति स्तूयमानमब्जसंभवादिभिरिन्दिरारमणो वासुकिमिदमवादीत्—'वत्स वासुके न वक्तव्यमिदं त्वया । परिजानतैव

हि भक्तिमियतीमपि मया प्रतिष्ठापितोऽसि प्रथमभुवनाधिपत्ये। तदिदानीं माहेश्वरं धनुरनुस्पृश्य संपादितं यशो माहेश्वरं गिरिमिमं प्रदक्षिणीकृत्य परिवर्धयेत्यादिशामि ।

तेजसाप्यायथिष्यामि दिव्येन त्वामसंशयम् ।
कामं वेष्टय मन्थाद्रिं कर्षन्तु त्वां सुरासुराः ॥ ७२ ॥'

इति दत्तवरो वासुकिरिन्दिरारमणेन, परितोषयन् सुरासुरान्, पश्यत्सु वैमानिकेषु, समुत्प्लुत्य वेगेन, मद्यःकृत्तविद्रुमकाण्डवत्संवेष्टयामास भोगेन मन्दरगिरेराभोगम् ॥

प्रणमन्तः स्तुवन्तश्च भगवन्तं जनार्दनम् ।
ववल्गुश्च जगर्जुश्च वासवाद्याः सुरासुराः ॥ ७३ ॥

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुरधिक-
शतप्रबन्धनिर्वाहकश्रीमन्महाव्रतयाजिश्रीमदप्पयदीक्षित-
सोदर्यश्रीमदाच्चान्दीक्षितपौत्रेण नारायणदीक्षितात्मजेन
श्रीभूमिदेवीगर्भसंभवेन श्रीनीलकण्ठदीक्षितेन
विरचिते श्रीनीलकण्ठविजये चम्पुकाव्ये
तृतीय आश्वासः ॥

# तुरीयाश्वासः ।

संवेष्टयन्नथ स मन्दरमम्बुराशौ
सार्धद्वयेन वलयेन भुजङ्गराजः ।
पार्श्वद्वयेऽपि शतयोजनमुच्छिशेष
पुच्छं मुखं च मथनाय सुरासुराणाम् ॥ १ ॥

ततः पूर्वजैः पूर्वकायः फणिपतेः, अवरजैरपरकायश्च परिग्राह्य इति न्यायमाचक्षाणेषु दानवेषु, कटाक्षेण कमलाक्षस्य, शासनेन च स्वयंभुवः, समुत्साहिताः परिकल्प्य शिरोभागमासुरं, परिजगृहुर्वालभागमदितिसुताः । अनन्तरमन्तर्भ्रमदचलराजमूलशिलासंघसंघर्षणकण्डूयननिद्राणकमठराजनिःश्वासपरम्परापरिहृतपवनाशनलोकदुर्भिक्षं, अभितः प्रकीर्णदुग्धकल्लोलनिपातपरिपूरितशुद्धजलार्णवं, आमूलपरिभ्रमदमृतसागरैकावर्तपरिभ्रमिततिमितिमिङ्गिलोद्गीर्णतत्कालनिगीर्णाजीर्णशफरतर्णकाकीर्णं, अत्युच्चशिखरिशिखरनिष्पतदच्छनिर्झरस्रोतोनिपातपरिधौतचक्रवालशिलाचक्रं, अतिरभससमुद्धूतधातुरागसमुद्भाविताकाण्डसन्ध्यासंसूचितहालाहलोपप्लवं, उत्प्लवमानसागरदुग्धशीकरास्वादसुहितभुजगराजभोगप्रसारणवेगपतदुत्पतत्सुरासुरस्तोमपर्यवस्थापनव्यग्रपद्मसंभवं, उभयपार्श्वसंघटितशिलासंघसंघर्षणसुखनिर्मुच्यमानचिरपरिणामनिर्मलवासुकिनिर्मोकशकलपरिधानसंजिघृक्षानुधाव-

---

चक्रवाल लोकालोकपर्वतः ॥

